आ समन्तात् प्रकाशमानत्वादाकाशशब्दोक्तः परमात्मा प्रचुरानन्दो यदि न स्यात् तर्ह्यसावशक्तः स्यात् तथा सति सर्वं न चेष्टयेत् । तेनाप्रेरिता लोकः न लौकिकचेष्टां प्रकृष्टां च धर्मचेष्टां च कुर्यात् । ततो लोकचेष्टान्यथानुपपत्त्या तत्कारणस्य विष्णोः सर्वशक्तत्वम् । अत एव बहुलानन्दत्वं सिद्ध्यति । न हि स्वानन्दस्य अल्पत्वं भवन्निवारयितुमसमर्थस्य सर्वशक्तित्वं सम्भवतीत्यर्थः । एतदानन्दमयादिपञ्चकं ब्रह्मशब्देन निर्दिष्टं श्रुतौ न तदपरं ब्रह्मेति शङ्क्यम् । तदुपक्रमे ब्रह्मविदाप्नोति परम् । तदेषाऽभ्युक्ता । सत्यं ज्ञानमनन्तं ब्रह्मेति परब्रह्मनिर्देशादित्येतमर्थं साधयत्सूत्रमुपन्यस्य व्याचष्टे **मान्त्रवर्णिकमेवेत्यादिना** ।

## ।। ॐ मान्त्रवर्णिकमेव च गीयते ॐ ।। १५ ।।

**'ब्रह्मविदाप्नोति परम् (तै. २-१)' इति सूचयित्वा**

**'सत्यं ज्ञानमनन्तं ब्रह्म (तै. २-१)' इति मन्त्रवर्णोपलक्षितं परमेव ब्रह्मशब्दानुसन्धानाद्गीयते।**

नन्वानन्दमयवत्तत्पुच्छस्यापि ब्रह्मत्वं श्रुत्यैव अभ्युपगन्तव्यम् । न च तद्युज्यते । एकदेशरूपस्य पुच्छस्य ब्रह्मत्वविरोधादिति । तन्नैवम् । स शिर इत्यादिश्रुत्या पूर्णेन परमात्मना तच्छिरोहस्तमध्यदेहपुच्छशब्दाभिधेयपादानां अत्यन्ताभिन्नतया प्रतिपादितत्वेन ब्रह्मत्वाविरोधात् । करचरणादिसमग्रावयवविभागसमर्थनाय प्रतिपादितत्वाच्च शिरो नारायण इत्यादिवचनेन चैतद्विरुद्धं भवति । तावष्टगुणमैश्वर्यं नायं स्वाभाविकं परमित्यादिवचनसिद्धाणिमाद्यष्टैश्वर्ययोगादघटितघटकत्वेन अतर्क्यशक्तेः अपरिमेय-प्रभावाच्च। तदाह **न चेदित्यादिना**।

**न चावयत्वविरोधः।**

**'स शिरः स दक्षिणः पक्षः स उत्तरः पक्षः स आत्मा स पुच्छम्' इति तस्यैवावयवत्वोक्तेश्चतुर्वेदशिखायाम्॥**

**'शिरो नारायणः पक्षो दक्षिणः सव्य एव च।**
**प्रद्युम्नश्चानिरुद्धश्च सन्दोहो वासुदेवकः॥**

**नारायणोऽथ सन्दोहो वासुदेवः शिरोऽपि वा।**
**पुच्छं सङ्कर्षणः एक प्रोक्त एक एव तु पञ्चधा॥**

**अङ्गाङ्गित्वेन भगवान् क्रीडते पुरुषोत्तमः।**
**ऐश्वर्यान्न विरोधश्च चिन्त्यस्तस्मिञ्जनार्दने॥**

**अतर्क्ये हि कुतस्तर्कस्त्वप्रमेये कुतः प्रमा'**

**इति बृहत्संहितायाम्।**

उक्तन्यायेनान्नरसमयस्यापि ब्रह्मत्वात्। तत्रान्नमेव रसोऽन्नरस इति व्याख्येयम्। **न त्वन्नस्य रस इति**। ततश्च रसशब्देन सारवाचिना विशेषितत्वादत्तृत्वादिप्रचुरं सर्वसारभूतं चिन्मात्ररूपं अन्नरसशब्देनोच्यते। न त्वन्नसारमेव भौतिकम्। एवं प्राणमयादिसर्वमपि चिन्मात्रमेवेत्यवगन्तव्यम्। रसो वै स इत्युत्तरत्र श्रवणात्। अन्नरसमयस्य ब्रह्मणोऽवयवयेष्वपि मनुष्यमस्तकादिसन्निहितेषु तस्येदमेव शिरः। अयं दक्षिणः पक्षः। इत्यादिव्यपदेशो वस्त्रप्रावृतदेवदत्तावयवेष्विव युज्यते। अन्नरसमयादन्योऽन्तर आत्मा प्राणमय इति व्यपदेशः स्वगतभेदवर्जितेऽपि ब्रह्मणि विशेषबलादघटितघटकैश्वर्याद्युज्यते। तदेतदाह **रसशब्देनेत्यादिना।**

**रसशब्देन विशेषणात्तत्तत्सारभूतं चिन्मात्रमेवोच्यते। इदमिति च दृश्यमानसन्निहितत्वात्।**

**'अनन्योऽप्यन्यशब्देन तथैको बहुरूपवान्।**

**प्रोच्यते भगवान् विष्णुरैश्वर्यात्पुरुषोत्तमः' इति ब्रह्माण्डे । न चोक्तप्राप्त्या विरिञ्चादिरुच्यते ॥ १५ ॥**

ब्रह्मशब्दाद्धिरण्यगर्भस्य प्राप्तिरित्यादिना हिरण्यगर्भादीनां अन्नमयादित्वं प्राप्स्यत इति यदुक्तं तद्दूषयत्सूत्रमवतार्य व्याचष्टे **नेतर इत्यादिना** ।

## ॥ ॐ नेतरोऽनुपपत्तेः ॐ ॥ १६ ॥

**न ह्यन्यज्ञानान्मोक्ष उपपद्यते ।**

**'तमेवं विद्वानमृत इहं भवति नान्यः पन्था अयनाय विद्यते (तै. आ ३-१२-७)' इति ह्युक्तम् ॥ १६ ॥**

यदा ह्येवैष एतस्मिन्नभयं प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भवतीति प्रकृतानन्दमयनिष्ठस्य यन्मोक्षश्रवणं तद्धिरण्यगर्भादीनां मध्ये कस्यचिदानन्दमयत्वे न स्यात् । तमेवं विद्वानमृत इह भवति । नान्यः पन्था अयनाय विद्यत इति श्रुत्या पुरुषोत्तमत्वेन मुख्यपुरुषाद्विष्णोरन्यज्ञानस्य मोक्षमार्गत्वनिषेधात् । अतः अनन्यथासिद्धेन मोक्षश्रवणे नान्यथासिद्धहिरण्यगर्भादिप्रापकं बाध्यत इत्यर्थः । अतोऽप्यत्र हिरण्यगर्भादिभ्योऽन्य एवानन्दमयः परमात्मा प्रतिपाद्यते तेभ्यस्तस्य भेदव्यपदेशादित्येतमर्थं प्रतिपादयत्सूत्रमुपन्यस्य व्याचष्टे **भेदेत्यादिना** ।

## ॥ ॐ भेदव्यपदेशाच्च ॐ ॥ १७ ॥

**'ते ये शतं प्रजापतेरानन्दाः (तै. २-८)' ।**

**अदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते ।**

**अथ सोऽभयं गतो भवति (तै. उ २-७)' ।**

**'स यश्चायं पुरुषे (तै. २-८)' इत्यादिभेदव्यपदेशात् ॥**

अयमर्थः ते ये शतं प्रजापतेरानन्दाः स एको ब्रह्मण आनन्द इति परिमितानन्दत्वेन निर्दिष्टेभ्यो हिरण्यगर्भादिभ्योऽपरिमितानन्दत्वेन आनन्दमयस्य भेदं व्यपदिशति । यतो वाचो निवर्तन्ते अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् इति श्रुतिः । यदा ह्येवैष एतस्मिन्नदृश्ये-ऽनात्म्ये निरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्द इत्यनेन । तत्राप्य-ानन्दमयोऽदृश्यत्वेन स्वामिरहितत्वेनानिरुक्तत्वेन सामस्त्येनाश्रयरहित-त्वेन प्रकृत्यादिप्रपञ्चाद्भिन्नः । जीवो ध्यानरूपां निष्ठां लब्ध्वा तमेव प्राप्नोतीति व्यपदिश्यते । अतो ब्रह्मादिजीवेभ्य आनन्दमयस्य भेदः सिद्ध्यति । स यश्चायं पुरुषे यश्चासावादित्ये स एक इत्यादिना स एक इत्यनेन आनन्द-मयस्य मनुष्यादित्वोपलक्षितोत्कृष्टापकृष्टजीवेभ्यो नियम्येभ्यस्तदन्तया-ऽमितया भेदोऽप्युपदिश्यते । अत्र जीवपरमात्माभेदवाक्यविरोधशङ्कां प्रमाणेनैव परिहरति **न चेत्यादिना**।

**न च 'तत्त्वमसि (छां. ६-८)'**

**'अहं ब्रह्मास्मि (बृ. ३-४-१०)' इत्यादिश्रुतिविरोधः।**

**'नामानि सर्वाणि यमाविशन्ति (भाल्लवेयश्रुतिः)'**

**इति तत्तच्छब्दवाच्यत्वोक्तेः।**

**'इदं हि विश्वं भगवानिवेतरो यतो जगत्स्थाननिरोधसम्भवः**
**(भाग. ५-२०)'।**

**'असर्वः सर्व इत्यपि (तुरश्रुतिः)'।**

**'विद्याऽऽत्मनि भिदाबोधः (भाग. ११-१९-१४)'।**

**'भेददृष्ट्याऽभिमानेन निस्सङ्गेनापि कर्मणा (भाग ३-३३-१२)'।**

**'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः**
**(मुं. ३-१-२)'।**

'असर्वः सर्व इवात्मैव सन्ननात्मेव प्रत्यङ् पराङिवैक ईयते बहुधेयते स पुरुषः स ईश्वरः स ब्रह्म'।

'सर्वान्तर्यामिको विष्णुः सर्वनाम्नाऽभिधीयते।

एषोऽहं त्वमसौ चेति न तु सर्वस्वरूपतः'॥

'नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वह' इत्यादेश्च।

**उक्ता च प्राप्तिः। 'ब्रह्मैव सन् (बृ. ६-४)' इत्यपि जीव एव ब्रह्मशब्दः। उपपद्यते च विरोधे।**

अयमर्थः। तत्त्वमस्याद्यभेदव्यपदेशमात्रेण दुःखिजीवस्य परमात्माभेदे पृथिव्यादेरपि जडस्य तेनाभेदः स्यात्। सर्वं खल्विदं ब्रह्मेति वाक्यात्। ततश्च दुःखित्वजडत्वादिदोषः परमात्मनोऽपि स्यात्। नेति नेतीत्यादिवाक्यवैय्यर्थ्यं च स्यात्। अतो नामानि सर्वाणि यमाविशन्तीति श्रुत्या सर्वपदवाच्यो विष्णुरित्युक्तत्वात्तत्त्वमस्यादिवाक्यगतपदैस्तत्त्वादिगुणयोगाद्विष्णुरुच्यते। न तु तस्य जीवादिभिरभेद इत्यङ्गीकरणीयम्। अभेदव्यपदेशमात्रेणाभेदे ग्रामो नामायमिति ग्रामाधिपतेः ग्रामस्य सामानाधिकरण्येन ग्रामाभेदः स्यात्। इदं हि विश्वं भगवानिवेतरः असर्वः सर्व इत्यनेनापि पुराणगतवचनेन सर्वं परमात्मव्यतिरिक्तमपि परमात्माधीनत्वात्परमात्माभिन्नमिव वक्तुं शक्यमित्युच्यते। जीवपरमात्मभेदस्य काल्पनिकत्वे विद्यात्मनि भिदा बोध इत्यनेन भागवतवचनेन विरोधः स्यात्। न च जीवेशभेदज्ञानस्यानर्थहेतुत्वादविद्यामयत्वमिति वाच्यम्। आद्यः स्थिरचराणां यो वेदगर्भः सहर्षिभिः भेददृष्ट्याभिमानेन निःसङ्गेनापि कर्मणा कर्तृत्वात्सगुणं ब्रह्मेत्यादिभागवतवचनविरोधात्। जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोक इत्यादिश्रुतिविरोधाच्च।

अत्र जीवेश्वरभेदज्ञानस्य परमपुरुषार्थसाधनत्वावगमात् । भारतेऽपि जीवपरमात्मैक्यं निषिद्धम् । बहवः पुरुषा ब्रह्मन्नुताहो एक एव त्विति प्रश्नस्य नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वहेति परिहारश्रवणात् । असर्वः सर्व इव सर्वान्तर्यामिक इत्येतद्वचनोक्तप्रकारेण जीवाद्यभेदवचनं योजयितव्यम् । ब्रह्मैव सन् ब्रह्माप्येतीत्येषा श्रुतिः न जीवेशभेदं निषेद्धुं शक्नोति । गौणवृत्त्या जीवे ब्रह्मशब्दसम्भवात् । मुख्यार्थे विरोधे गौण्या वृत्तेरुपपद्यमानत्वात् । न हि नित्यमुक्तत्वादिलक्षणब्रह्मभावः संसारिणो जीवस्य विरुद्ध्यते । मुख्यतो ब्रह्मत्वे जीवस्य ब्रह्माप्येतीति ब्रह्मप्राप्तिश्रवणविरोधश्च स्यात् । जीवो न मुक्तश्चेद्विमुक्तश्च विमुच्यत इति श्रुतिः कथं युज्यत इत्यत आह **प्रमादात्मकत्वादिति**।

**प्रमादात्मकत्वाद्बन्धस्य विमुक्तत्वं च युज्यते । 'मुक्तिर्हित्वाऽन्यथारूपं स्वरूपेण व्यवस्थितिः' इति हि भागवते ॥ १७॥**

**न च तत्तदनुमानविरोधः।**

विमतो भेदो मिथ्या भेदत्वाच्चन्द्रभेदवत् । जीव ईशेनाभिन्नश्चेतनत्वादीशवदित्याद्यनुमानं जीवेशभेदविरोधीत्येतन्निषेधत्सूत्रमुपन्यस्य व्याचष्टे **कामादित्यादिना**।

## ॥ ॐ कामाच्च नानुमानापेक्षा ॐ ॥ १८ ॥

यथाकामं ह्यनुमातुं शक्यते। अतो न तत्त्वे पृथगनुमानमपेक्ष्यते। उक्तं च स्कान्दे——

**'यथाकामाऽनुमा यस्मात्तस्मात्साऽनपगा श्रुतेः।**
**पूर्वापराविरोधाय चेष्यते नान्यथा क्वचित्' इति॥**

**'नैषा तर्केण मतिराऽपनेया (कठ. २-९)' इति च॥ १८॥**

मुक्तौ जीवप्राप्यतया व्यपदेशादित्येतमर्थं प्रतिपादयत्सूत्रमुपन्यस्य व्याचष्टे **अस्मिन्नित्यादिना**॥

**॥ ॐ अस्मिन्नस्य च तद्योगं शास्ति ॐ ॥ १९ ॥**

**अस्य जीवस्य। युक्तिसमुच्चये चशब्दः।**

जीवस्येशत्वमनुभवविरुद्धम् । ईशस्य जीवत्वं श्रुतिविरुद्धम् । एवं प्रत्यक्षादिप्रमाणविरोधान्नानुमानं जीवेशभेदं निषेद्धुं शक्नोति । प्रमाणविरुद्धानुमानस्य प्रामाण्ये अग्निरनुष्णः पदार्थत्वात् इत्येतदनुमानस्यापि प्रामाण्यं स्यात् । अतो अतीन्द्रियार्थे श्रुत्यङ्गत्वेनैव अनुमानमुपादेयम् । न श्रुतिमपहायेत्यर्थः । इतोऽप्यखिलजीवादिभ्यो अन्य एवानन्दमयः परमात्मा विष्णुरत्र प्रतिपाद्यते **सोश्नुते इत्यादिना**।

**'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता (तै. २-२)'।**

**अनिलयनेऽभयं प्रतिष्ठां विन्दते (तै. २-७)'।**

**'एतमानन्दमयमात्मानमुपसङ्क्रामति (तै. २-२१)' इत्यादि॥ १९॥**

*॥ इति आनन्दमयाधिकरणम् ॥ ६ ॥*

गताधिकरणेनोत्तराधिकरणस्य सङ्गतिं तावदारभते **अदृश्य इत्यादिना**।

**'अदृश्येऽनात्म्ये' इत्युक्तम्। तच्चादृश्यत्वं**

इदमाम्नायते। **अन्तःप्रविष्टं कर्तारमेतमिति**।

**'अन्तः प्रविष्टं कर्तारमेतमन्तश्चन्द्रमसि मनसा चरन्तम्।**

**सहैव सन्तं न विजानन्ति देवाः'**

**इत्यन्तः स्थस्य कस्यचिदुच्यते।**

**स च 'इन्द्रो राजा' 'सप्त युञ्जन्ति' इत्यादिभिरन्यः प्रतीयते।**

**तस्मात्स एवानन्दमय इति न मन्तव्यम्।**

अत्रान्तःस्थितस्य पुरुषस्यानन्दमयधर्मत्वेन तत्प्रकरणपठितमदृश्यत्वं श्रूयते सहैव सन्तं न विजानन्ति देवा इति । तेनैतद्विचारो गताधिकरणेन सङ्गतः । अत्र देवैरविज्ञायमानोऽन्तःप्रविष्टः कर्ता इन्द्रो वा सूर्यो वा अग्न्यादिर्वा भवेत् । अन्तःप्रविष्टस्य कर्तुः प्रकरणे इन्द्रो राजा जगतो य ईशे इतीन्द्रशब्दश्रवणात् । सप्त युञ्जन्ति रथमेकचक्रमिति सूर्यलिङ्गश्रवणात् । ब्रह्मेन्द्राग्न्यादिशब्दश्रवणात् । अतः अर्थादानन्दमयोऽपि इन्द्राद्यन्यतम इति प्रतिक्षिपत्सूत्रमुपन्यस्यति **अन्तर इति।**

## ।। ॐ अन्तस्तद्धर्मोपदेशात् ॐ ।। २० ।।

व्याचष्टे **अन्तःश्रूयमाण इत्यादिना।**

**अन्तः श्रूयमाणो विष्णुरेव।**

**'अन्तस्समुद्रे मनसा चरन्तम्। ब्रह्मान्वविन्दद्दशहोतारमर्णे'।**

**'समुद्रेऽन्तः कवयो विचक्षते मरीचीनां पदमिच्छन्ति वेधसः'**

**यस्याण्डकोशꣳशुष्ममाहुः' इत्यादि तद्धर्मोपदेशात्।**

**स हि क्षीरसमुद्रशायी। तस्य च वीर्यमण्डकोशः।**

**'सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः।**

**अप एव ससर्जादौ तासु वीर्यमवासृजत्।।**

**तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्।**

**यस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः ।**

**आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।**

**अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः इति व्यासस्मृतेः ।**

अयमर्थः । अन्तःप्रविष्टं कर्तारमेतं इत्येतद्वाक्योक्तो विष्णुरेव तत्प्रकरणवाक्येषु अन्तःसमुद्र इत्यादि विष्णुलिङ्गश्रवणात् । एतच्च विष्णोरेव लिङ्गम् इत्येतत् व्यासस्मृत्या दर्शयति सोऽभिध्यायेति । एतदेव श्रुत्यन्तरेण द्रढयति **अहं तत्तेज इति** ।

**'अहं तत्तेजो रश्मीनारायणं पुरुषं जातमग्रतः ।**

**पुरुषात्प्रकृतिर्जगदण्डम्' इति चतुर्वेदशिखायाम् ॥ २० ॥**

अहेयत्वादहंनामकम् । रश्मीनीरयति प्रेरयतीति । रश्मिशब्दवाच्यम् । रश्मिं रश्मीनां मध्ये तपन्तमित्याद्युक्तं जलायनत्वान्नारायणनामकं एतत्तेजोऽग्र आसीत् तस्मात्पुरुषशब्दाभिधेयात् प्रकृतिद्वारा जगदण्डं जातमित्यर्थः । एतेनान्यसिद्धेन विष्णुलिङ्गेनेन्द्रादिश्रुतीनां अन्यथासिद्धानां बाधितत्वात् नेन्द्राद्यन्यतमो अन्तरित्यादिवाक्ये शङ्कनीयः । इन्द्रादिश्रुतिलिङ्गानि तु इन्द्राद्यन्तर्यामीत्युपपद्यन्ते । इत्यतोऽपीन्द्रादिभ्यो भेदेन तदन्तर्यामिणोऽत्र व्यपदेशात् । स एव विष्णुः प्रतिपाद्यते न त्विन्द्रादिरित्येतत्प्रतिपादकं सूत्रमुपन्यस्य व्याचष्टे **भेदेत्यादिना** ।

**॥ ॐ भेदव्यपदेशाच्चान्यः ॐ ॥ २१ ॥**

**'इन्द्रस्यात्मा निहितः पञ्च होता' 'वायोरात्मानं कवयो निचिक्युः'**

**'अन्तरादित्ये मनसा चरन्तम्, देवानांऽहृदयं ब्रह्मान्वविन्दत्'**

**इत्यादिभेदव्यपदेशात् ॥ २१ ॥**

पञ्चेन्द्रियवदेव वृत्तियोगात् शब्दादिविषयैराहुतिभिर्वा होतारो यष्टारो वा यस्यासौ पञ्चहोता हृदि अयनत्वात् हृदयमित्यन्तःप्रविष्टः शास्तोच्यत इत्यर्थः

*॥ इति अन्तःस्थत्वाधिकरणम् ॥ ७॥*

इन्द्रादि जीवेश्वरसम्भावितधर्मोपदेशात्तेभ्योऽन्यः । परमात्मा विष्णुरित्युक्तम् । उपर्याकाशादिष्वसम्भावितलिङ्गनिर्देशात् तेभ्योऽन्य इत्येतत्प्रतिपादकसूत्रव्याख्यानं कर्तुमाह **को ह्येवेति** ।

**'को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यात्'**

**इत्याकाशस्यानन्दमयत्वे हेतुरुक्तः, न तु विष्णोरिरिति न मन्तव्यम् । यतः -**

## ॥ ॐ आकाशस्तल्लिङ्गात् ॐ ॥ २२ ॥

**'अस्य लोकस्य का गतिरित्याकाश इति होवाच'**

**इत्यत्र भूताकाशस्य प्राप्तिः । न चासौ युज्यते, किन्तु विष्णुरेव ।**

**'स एष परोवरीयानुद्गीथः स एषोऽनन्तः' इत्यादि तल्लिङ्गात् ।**

**'विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि ।**

**परो मात्रया तन्वा वृधान' इत्यादिना तस्यैव हि तल्लिङ्गम् ।**

**'अनन्तो भगवान्ब्रह्म आनन्देत्यादिभिः पदैः ।**

**प्रोच्यते विष्णुरेवैकः परेषामुपचारतः' इति ब्राह्मे ।**

**'नामानि सर्वाणि यमाविशन्ति' इति चोक्तम् ॥ २२ ॥**

*॥ इत्याकाशाधिकरणम् ॥ ८ ॥*

छान्दोग्ये श्रूयते । अस्य लोकस्य का गतिरिति आकाश इति होवाच सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति आकाशो ह्येवैभ्यो ज्यायान् । आकाशः परायणं स एष परोवरीयानुद्गीथः स एषोऽनन्त इति तत्राकाशशब्दनिर्दिष्टो भूताकाश एव लोकप्रसिद्धत्वाद्भवेत् । ततश्च को ह्येवान्यात्कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात् इत्यानन्दमयप्रकरणपठितोऽपि स एव भवेदिति एवं प्राप्ते अभिधीयते । अत्राकाशशब्देन विष्णुरेवोच्यते । स एषोऽनन्त इत्यादि लिङ्गात् । अपरिमितगुणत्वं हि अनन्तत्वं मुख्यतो विष्णुरेव श्रूयते । विष्णोर्नुकं इत्यादि श्रुतौ । भागवते चैतदुक्तम् । विष्णोर्नु वीर्यगणानां कतमोर्हतीह यः पार्थिवान्यपि कविर्विममे रजांसीति । अत एवानन्तशब्दो विष्णुरूढः । सर्वभूतोत्पादकत्वे हेतुः इति श्रवणात् । आकाशशब्दार्थः परमात्मेति ज्ञायते । सर्वभूतोत्पादकत्व-मुपनिषत्सूत्रसिद्धम् ॥

उक्तन्यायेन श्रुत्यन्तरस्य विष्णुपरत्वं च साधयत्सूत्रमुपन्यस्य व्याचष्टे **अत एवेत्यादिना**।

## ॥ ॐ अत एव प्राणः ॐ ॥ २३ ॥

**'तद्वै त्वं प्राणो अभवः महान्भोगः प्रजापतेः ।**

**भुजः करिष्यमाणः यद्देवान्प्राणयो नवा ॥**

**इति महाभोगशब्देन परमानन्दत्वं प्राणस्योक्तम् ।**

**स च प्राणः प्रसिद्धेर्वायुरित्यापतति ।**

इदमाम्नायते । तद्वै त्वं प्राणो अभव इति प्राणशब्दस्य वायौ रूढत्वात् तेनात्र तावद्वायुरेवोच्यते । न च गताधिकरणन्यायेन प्राणशब्दार्थो विष्णुरिति सिद्ध्यति । यद्देवान् प्राणयो न वेति वाक्यशेषविरोधात् । नवशब्दो-

पलक्षितेन्द्रियदेवादिप्रणेतृत्वस्य प्राणलिङ्गत्वात् । आनन्दमयत्वं विष्णोरेवोक्तम् । तदपि न युज्यते महान्भोग इति प्राणशब्दार्थस्य वायोः परानन्दश्रवणात् । भुज्यत इति भोग इति आनन्दस्य भोगशब्देन ग्रहणादित्येतं पक्षं प्रतिक्षिपति **न चैवमित्यादिना** ।

**न चैवं यतो विष्णुरेव प्राणाः ।**

**अत एव 'श्रीश्च ते लक्ष्मीश्च पत्न्यौ अहोरात्रे पार्श्वे**

**इत्यादि तल्लिङ्गादेव ॥ २३ ॥**

श्रीश्च ते लक्ष्मीश्च पत्न्याविति श्रूयमाणं द्विरूपलक्ष्मीपतित्वं प्राणशब्दार्थो विष्णुरेवेति ज्ञापयति । न हि वायोर्लक्ष्मीपतित्वं युज्यते । यदुक्तं देवप्रणेतृत्वं प्राणलिङ्गं तत्प्रेरके हृशीकेश एव मुख्यं प्राणस्य प्राणमिति श्रुतेरित्यर्थः ॥

*॥ इति प्राणाधिकरणम् ॥ ९ ॥*

**'यो वेद निहितं गुहायाम्' इत्युक्तम् । तच्च गुहानिहितम्**

**'वि मे कर्णापतयतो विचक्षुर्वीक्षदं ज्योतिर्हृदय आहितं यत् ।**

**वि मे मनश्चरति दूर आधीः किंस्विद्वक्ष्यामि किमु नू मनिष्ये'**

**इति ज्योतिरुक्तम् ।**

**तच्च ज्योतिरग्निसूक्तत्वात्प्रसिद्धेश्चाग्निरेवेति प्राप्तम् । अत आह -**

ऐतरेये श्रूयते । विमेकर्णापतयत इत्यादि । अत्र परमात्मधर्मेण यो वेदनिहितं गुहायामिति श्रुतिसिद्धेन विशिष्टं ज्योतिरुच्यते । इदं ज्योतिर्हृदय आहितं यदिति । अतो विचार्यते । किमयं ज्योतिःशब्दोऽग्निपरः उत विष्णुपर इति ज्योतिश्शब्दस्य अग्निसूक्तगतत्वादग्नौ प्रसिद्धत्वात् । तेनाग्निरेवोच्यत इत्येतत्पक्षं प्रतिक्षिपत्सूत्रमुपन्यस्य व्याचष्टे **ज्योतिश्चरणाभिधानादित्यादिना** ।

## ॥ ॐ ज्योतिश्चरणाभिधानात् ॐ ॥ २४ ॥

**विष्णुरेव ज्योतिः। कर्णादीनां विचरणाभिधानात्। स हि 'परो मात्रया तन्वा वृधान' इत्यादिना कर्णादिविदूरः ॥ २४॥**

अत्र तावत्करणादीन्द्रियाणां विपतनं विचरणं अन्तर्ज्योतिर्विपरीतगमनमेव ज्योतिषश्च तद्विपरीतावस्थानं किंस्विद्वक्ष्यामि । किमु नू मनिष्य इति वाक्यशेषादवगम्यते । अतो यन्मनसा न मनुत इत्यादिश्रुत्यन्तरसिद्धादिन्द्रियविदूरत्वाख्यविष्णुलिङ्गाद्धृदयाहितं ज्योतिर्विष्णुरेव हि । मन आदिविदूरत्वं नाम मन आदिभिरपरिमेयत्वमेव । न तु सर्वथाऽग्राह्यत्वम् । श्रोतव्यो मन्तव्यो इत्यादिश्रुतिविरोधापत्तेः । अप्रमेयत्वं च विष्णोरेव श्रुतम्। परो मात्रया तन्वावृधानेत्यादि श्रुत्यन्तरेण। अत्र परशब्दस्यावध्यपेक्षत्वात् मात्राशब्दः पञ्चम्यन्तः कार्यः। ततश्च मात्राया मितेः परोऽपरिमेयप्रभावो मितिसाधनत्वेन मात्राशब्दोदितेन्द्रियगणपथातीतश्चेत्युक्तं भवति ॥

*॥ इति ज्योतिरधिकरणम् ॥ १० ॥*

अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्टेष्वनुत्तमेषु लोकेषु इदं वाव तद्यदिदमस्मिन्नन्तःपुरुषे ज्योतिः श्रुत्यन्तरादपि विष्णुरेव मुख्यज्योतिः । इदमेवाक्षिप्य समर्थयत्सूत्रमुपन्यस्य व्याचष्टे **छन्दोभिधानादित्यादिना**।

## ॥ ॐ छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात्तथा हि दर्शनम् ॐ ॥ २५ ॥

**'अथ यदतः परो दिवो ज्योतिर्दीप्यते' इत्युक्तस्य ज्योतिषो 'गायत्री वा इदꣳ सर्वम्' इति गायत्र्या समारम्भः कृतः। तस्मान्न विष्णुरिति चेन्न।**

**तथा चेतोऽर्पणार्थं हि निगद्यते।**

**अग्निगायत्र्यादिशब्दार्थरूपोऽसाविति चेतोऽर्पणार्थं हि निगद्यते।**

**तथा हि दर्शनं 'गायति त्रायति च' इत्यादि।**

**'सर्वच्छन्दोऽभिधो ह्येषः सर्वदेवाभिधो ह्यसौ।**

**सर्वलोकाभिधो ह्येषः तेषां तदुपचारत' इति वामने॥ २५॥**

न च वाच्यं गायत्री वा इदं सर्वमिति गायत्रीछन्दः प्रारम्भात् । नात्र ज्योतिश्शब्दार्थो विष्णुरिति । गायति च त्रायति च तस्माद्गायत्रीनामेति । गायत्रीशब्दस्य विष्णुपरत्वश्रुतेः सर्वच्छन्दोभिधो ह्येश इति पुराण-वचनाच्चेत्यर्थः । स एषा चतुष्पदीत्युक्त्वा तदेतदृचाभ्युक्तम् । पादोऽस्य सर्वा भूतानि इति श्रुतेश्च । गायत्रीशब्दो विष्णुपर इत्येतत्सूत्रमुपन्यस्य व्याचष्टे **भूतादीत्यादिना।**

## ॥ ॐ भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॐ ॥ २६ ॥

**'तावानस्य महिमा ततो ज्यायांश्च पुरुषः।**

**पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि' इति।**

**'सुवर्णं कोशं रजसा परिवृतम् देवानां वसुधानीं विराजम्।**

**अमृतस्य पूर्णां तामु कलां विचक्षते पादं षड्ढोतुर्न किला विवित्स इति श्रुतेः। पाद इति एकदेशपरिमितं चतुर्भागबल इति वद्भिन्नं च शब्दात्।**

**स हि पुरुषसूक्ताभिधेयः 'यज्ञेन यज्ञमयजन्त' इति यज्ञशब्दात्।**

**'यज्ञोवै विष्णुर्देवता' इति हि श्रुतिः।**

**'तस्मिन्काले महाराज राम एवाभिधीयते।**

**यथा हि पौरुषे सूक्ते विष्णुरेवाभिधीयते।' इति च स्कान्दे॥ २६॥**

न हि चतुर्विंशत्यक्षरा गायत्री एवंविधपादवती । न च विष्णोरपि सर्वभूतानि न पाद इति वाच्यम् । यज्ञदत्तचतुर्थांशोऽयं बलपरिमाणे देवदत्त इतिवत् । विष्णोरत्यन्तभिन्नेश्वेव सर्वभूतेषु चतुर्थांशपरिमिताभिप्रायेण पादशब्दोपपत्तेः । अत्यल्पत्वोपलक्षणं पादशब्दः । तथाहि श्रुत्यन्तरम् । अमृतस्य पूर्णां तामु कलां विचक्षते । पाद९ षड्ढोतुर्न किलाविवित्स इति षड्ढोतुरिन्द्रियैः सारादनकर्तुः विष्णोरिदं सुवर्णाकाशरूपं मुक्तामुक्तजीवसहितं सुवर्णं ब्रह्माण्डं कलां विचक्षते कवयः । यतोऽसौ सुवर्णकोशः पादं न विवित्स इति पादसाम्यं न लभत इत्यर्थः । न च पादोऽस्येति मन्त्रोऽन्यपरः शङ्कनीयः पुरुषसूक्तगतत्वात् । यज्ञेन यज्ञमयजन्तेति वाक्यशेषात् पुरुषसूक्ते विष्णुरेवाभिधीयत इति ज्ञायते । देवाः यज्ञं विष्णुमयजन्त इत्यर्थः । यज्ञो वै विष्णुरिति श्रुतेः । यज्ञो यज्ञपतिर्यज्वेति स्मृतेश्च । न च वाच्यम् अथ यदतः पर इत्युक्तत्वात् स्वर्गादिलोकात् परतो वैकुण्ठे दीप्यमाना ज्योतिः-शब्दार्थाद्विष्णोरन्यदेव पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि इत्यत्र स्वर्गस्थत्वेनोच्यत इति । दिवीतिशब्दस्य द्योतमानत्वयोगेन वैकुण्ठपरत्वात् । अत एव क्वचित्सप्तलोकापेक्षया दिवः पर इति त्रिलोकापेक्षया दिवीत्युपदेशो युज्यते । इदमेव प्रतिपादयत्सूत्रमुपन्यस्य व्याचष्टे **उपदेशेत्यादिना** ।

## ॥ॐ उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॐ ॥ २७ ॥

**त्रिपादस्यामृतं दिवि इति पूर्वोपदेशः ।**

**'परो दिवः इति पञ्चम्यन्तः पश्चिमः ।**

**तस्मान्नैकं वस्त्वत्रोच्यत इति चेन्न ।**

**त्रिसप्तलोकापेक्षयोभयस्मिन्नप्यविरोधात् ॥ २७ ॥**

*॥ इति गायत्र्यधिकरणम् ॥ ११ ॥*

**'प्राणो विष्णुरित्युक्तम्। तत्र**

**'ता वा एताः शीर्षन् श्रियः स्थिताश्चक्षुश्श्रोत्रं मनो वाक्प्राणः'।**

**इत्यत्र प्राणस्य विष्णुत्वं न विद्यते।**

**इन्द्रियैः सहाभिधानादिति। अत आह-**

अतोऽत्र ज्योतिश्शब्दार्थो विष्णुरिति सिद्धम् । ऐतरेये श्रूयते । ता वा एताः शीर्षन्छ्रियः श्रिताश्चक्षुः श्रोत्रं मनो वाक् प्राण इति तत्र पूर्वं विष्णुविषयत्वेनोदितः प्राणशब्दः श्रूयमाणो विचार्यते किं विषयोऽयमिति । तत्र तावदयं प्राणो मुख्यप्राणो भवितुमर्हति न विष्णुः इन्द्रियपङ्क्तिगणितत्वात् । यथेन्द्रियपङ्क्तिगणितं न चक्षुर्विष्णुरित्येत्पक्षं प्रतिक्षिपत्सूत्रमुपन्यस्य व्याचष्टे **प्राणस्तथेत्यादिना**।

## ।। ॐ प्राणस्तथाऽनुगमात् ॐ ।। २८ ।।

**'तं देवाः प्राणयन्त' 'स एषोऽसुः स एष प्राणः'**

**'प्राण ऋच इत्येव विद्यात्', 'तदयं प्राणोऽधितिष्टति'**

**इत्याद्यनुगमात्, अत्रापि प्राणो विष्णुरेव।**

**'विष्णुमेवानयन्देवा विष्णु भूतिमुपासते।**

**स एव सर्ववेदोक्तस्तद्रथो देह उच्यते' इति स्कान्दे।**

**ब्रह्मशब्दानुगमाच्च ।। २८ ।।**

अयमर्थः । परमात्माऽसाधारणधर्मयुक्तत्वेन अभ्यस्यमानत्वादत्र प्राणो विष्णुरेव । तथा हि । तं देवाः प्राणयन्त्येत्यनेन तस्य प्रकृतस्य प्राणस्य सर्वब्रह्मादिदेवैः सर्वलोकेष्वानीतत्वमाहात्म्यस्यानेन प्रकृतत्वमुच्यते । स एषोऽसुः स एष प्राणः तं भूतिरिति देवा उपासांचक्रिर इत्यन्तेन तस्यैव

प्राणस्यैश्वर्यवतः पद्मजादिदेवैरुपास्यत्वमुच्यते । स एषोऽसुः स एष प्राणः सर्वे वेदा सर्वे घोषाः एकैव व्याहृतिः । प्राण एव प्राण ऋच इत्येव विद्यादित्यनेन सर्वे वेदाः प्राणे प्राणस्यैव व्याहृतिः परस्परविरोधशून्यतया प्रतिपादका । ऋचः तस्य विशेषेण प्रतिपादका इत्युच्यन्ते । अथ देवरथस्तस्य वाक्शुद्धिः श्रोत्रे पक्षसी चक्षुषी युक्ते मनः सङ्गृहीता तदयं प्राणोऽधितिष्ठतीत्यनेन वागादिभी रथोपकरणत्वेन कल्पितैर्युक्तस्य देहस्थाख्यस्य शरीरस्य मुख्याधिष्ठाता प्राण इत्युच्यते । तथा च स्कान्दवचनं विष्णुमेवानयन्निति । एतद्ब्रह्मैतत्सत्यम् । अयं पुरुषो ब्रह्मणो लोकः तत्प्रपदाभ्यां प्रापद्यत ब्रह्मेयमित्यादिब्रह्मशब्दाभ्यासादप्येतद्विद्याप्रतिपाद्यो विष्णुरिति ज्ञायते । तस्मादिक्ष्वाकुवंशराजावलीगणितदाशरथिरामवदिन्द्रियगणगणितोऽप्ययं प्राणो विष्णुरेवेति युक्तम् । न च वाच्यम् तमिन्द्र उवाच प्राणो वा अहमस्मि ऋषे इति वचनादत्रेन्द्र एव प्राणशब्दार्थो विवक्षित इति । प्राणस्त्वं प्राणः सर्वाणि भूतानि प्राणो ह्येष य एष तपतीति सर्वान्तर्यामित्वेन प्राणव्यपदेशात् । न हीन्द्रस्य जीवविशेषस्य सर्वान्तर्यामित्वं युज्यत इत्येतत्प्रतिपादयत्सूत्रमुपन्यस्य व्याचष्टे **न वक्तुरित्यादिना** ।

**॥ ॐ न वक्तुरात्मोपदेशादिति**
**चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् ॐ ॥ २९ ॥**

**'प्राणो वा अहमस्म्यृषे' इति वक्तुरात्मोपदेशादिन्द्र एवेति चेन्न,**

**'प्राणस्त्वं प्राणः सर्वाणि भूतानि' इति वह्वध्यात्मसम्बन्धो ह्यत्र विद्यते ॥ २९ ॥**

दृष्टश्चान्तर्यामिविषयतया अहंशब्दः श्रुत्यन्तरे तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदे । अहं मनुरभवं सूर्यश्चेत्यादौ वामदेवस्याहं मनुसूर्यादित्वं देवदत्तस्येव विरुद्धमेव । अतो वामदेवाद्यहेयतया अहंनामको

मनुसूर्यनियमनादियोगेन मनुसूर्यादिशब्दार्थः । तथा च प्रल्हादवचनम् । सर्वगतत्वादनन्तस्य स एवाहमवस्थित इति । एतत्प्रतिपादयत्सूत्रमुपन्यस्य व्याचष्टे **शास्त्रेत्यादिना।**

## ॥ ॐ शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॐ ॥ ३० ॥

**शास्त्रमन्तर्यामी। 'संविच्छास्त्रं परं पदम्' इति हि भागवते।**

ननु प्राणो वा अहमस्मीत्यादिना इन्द्रादिभिरभेदः प्राणस्योच्यते न तु तदन्तर्यामित्वमिति चेन्मैवम् । अन्तः प्रविष्टः शास्ता जनानाम् । य आत्मानमन्तरो यमयतीत्यादिश्रुतिविरोधात् प्राणोऽहमिति व्यपदेशात् इन्द्रस्य प्राणत्वे ग्रहोऽहमिति व्यपदेशाद्ग्रहाविष्टपुरुषस्यापि ग्रहत्वप्रसङ्गः । अतः सिंहवेषधारिणि नटे सिंहो जातो नट इतिवत् सर्वाधिष्ठात्रा प्राणशब्दवाच्येन विष्णुना इन्द्राद्यभेदव्यपदेशो नानुपपन्नः तथा च पाद्मवचनम् । **तत्तन्नाम्नेति।**

**'तत्तन्नाम्नोच्यते विष्णुः सर्वशास्तृत्वहेतुतः।**

**न क्वापि किञ्चिन्नामस्ति तमृते पुरुषोत्तमम्' इति पाद्मे।**

**अहं मनुरभवं सूर्यश्च' इत्यादिवत्॥ ३० ॥**

ननु जीवोऽत्र प्राणो भवितुमर्हति । एष इमं लोकमभ्यार्चत्पुरुषेण य एष तपति तं शतं वर्षाण्यभ्यार्चत् । तस्माच्छतं वर्षाणि पुरुषायुषो भवन्तीति प्रस्तुतस्य प्राणस्य शतवर्षायुष्ट्वश्रवणात् । इदमेव शतायुष्ट्वं जीवलिङ्गमनुसन्धीयते । तस्य वा एतस्य बृहतीसहस्रस्य सम्पन्नस्य षट्त्रिंशतमक्षराणां सहस्राणि भवन्ति शतवत्सरस्याह्नां सहस्राणि भवन्तीति । मुख्यप्राणो वाऽत्र प्राणशब्देन प्रतिपाद्यः स्यात् । ता अहिंसन्त – अहमुक्थ्यमस्मीति तमब्रुवन् । हन्तास्माच्छरीरादुत्क्रामाम तद्यस्मिन्नुत्क्रान्त इदं शरीरं पत्स्यति तदुक्तं भविष्यतीत्यादिना प्रस्तुतस्य प्राणस्येन्द्रियैः

संवादशरीरोत्क्रमणादिश्रवणात्। इदं मुख्यप्राणलिङ्गत्वेन प्रसिद्धं श्रुत्यन्तरे। अथ ह प्राणा अहं श्रेयसि व्यूदिरे अहं श्रेयानस्मीत्यादावित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे जीवेत्यादिना।

## ॥ ॐ जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॐ ॥ ३१ ॥

यज्जीवादिलिङ्गमुक्तं तज्जीवमुख्यप्राणान्तर्यामिणि विष्णवावेवमुपपद्यते। तस्य नित्यस्याप्यस्मिन्देहे शतवर्षावस्थानसम्भवात्। मुख्यप्राणद्वारा इन्द्रियसंवादशरीरोत्क्रमणादिसम्भवात्। अतो जीवाद्यन्तर्यामित्वेन स्थितो विष्णुरेव प्राणशब्दाभिधेयो न जीवादिः प्रतिपाद्यते। स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यतेत्यादिना। अत्र जीवान्तर्यामिरूपेण अवताररूपेण सर्वगतरूपेण भगवान्विष्णुस्तत्तद्रूपोपासकयोग्यताभेदादित्यर्थः ॥

*इति सत्तर्कदीपावल्यां प्रथमाध्यायस्य प्रथमः पादः समाप्तः ॥*

**'तावन्ति शतसंवत्सरस्याह्नां सहस्राणि भवन्ति'**

**इति जीवलिङ्गम्। प्राणसंवादादि मुख्यप्राणलिङ्गम्। तस्मान्नेति चेन्न। अन्तर्बहिः सर्वगतत्वेनेत्युपासत्रैविध्यादिहाश्रितत्वाच्च।**

**' स एतमेव सीमानं विदर्यैतया द्वारा प्रापद्यत'**

**' स एतमेव पुरुषं ब्रह्म ततममपश्यत्'**

**'एतद्ध स्म वै तद्विद्वानाह महिदास ऐतरेयः' इत्यादिना।**

**'महिदासाभिधो जज्ञे इतरायास्तपोबलात्।**

**साक्षात्स भगवान्विष्णुर्यस्तन्त्रं वैष्णवं व्यधात्' इति ब्रह्माण्डे। तत्तदुपासनायोग्यतया च पुरुषाणाम्।**

**'केषाञ्चित्सर्वगत्वेन केषाञ्चिद्धृदये हरिः ।**

**केषाञ्चिद्बहिरेसावुपास्यः पुरुषोत्तमः' इति ब्राह्मे ।।**

**'अग्नौ क्रियावतां विष्णुर्योगिनां हृदये हरिः ।**

**प्रतिमास्वप्रबुद्धानां सर्वत्र विदितात्मनाम्' इति च ।। ३१ ।।**

*।। इति पादान्त्यप्राणाधिकरणम् ।। १२ ।।*

।। इति श्रीमदानन्दीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रभाष्ये प्रथमाध्यायस्यप्रथमः पादः ।।

## द्वितीयः पादः

अभिहितोऽर्थान्तरप्रसिद्धानां नाम्नां पूर्वं समन्वयो विष्णौ । अधुना लिङ्गवाचिनां बाहुल्येनार्थान्तररूढानामपि केषाञ्चिद्वैश्वानरादिशब्दानां सङ्गति-विशेषात्समन्वयोऽस्मिन्पाद इत्याह **लिङ्गेति** ।

**लिङ्गात्मकानां शब्दानां विष्णौ प्रवृत्तिं दर्शयत्यस्मिन्पादे प्राधान्येन ।**

गताधिकरणेनास्याधिकरणस्य सङ्गतिं दर्शयन् पूर्वपक्षं दर्शयति **ब्रह्मेति** । इदमाम्नायते ।

**'ब्रह्मततमम्' इति सर्वगतत्वमुक्तं विष्णोः ।**

**तच्च 'तस्यैतस्यासावादित्यो रसः' इत्यादिनादित्यस्य प्रतीयत इत्यतोऽब्रवीत् ।**

एतं ह्येव बहुऋचामाहेत्युक्ते मीमांसन्त एतमग्नावध्वर्यव एतं महाव्रते च्छन्दोगा एतमस्यामेतं दिव्येतं वायावेतं विद्युतीति । पृथिव्यादिसर्वगतत्वेन मीमांस्यमानः तस्यैतस्यासावादित्यो रसः स यश्चायमशरीरः प्रज्ञात्मे-त्युपक्रमवशादादित्यो भवेत् । अतश्च ब्रह्म ततममिति यत्ततमत्वं विष्णोरुक्तं

तदप्येकवाक्यवशादादित्यस्यैव युक्तमित्येतं पक्षं प्रतिक्षेप्तुं सूत्रमुपन्यस्य व्याचष्टे **सर्वत्रेत्यादिना**।

## 'ॐ सर्वत्र प्रसिद्धोपदेशात् ॐ ॥ १ ॥

**'स यश्चायमशरीरः प्रज्ञात्मा इत्यादिना सर्वत्रोच्यमानो नारायण एव।**

**'तदेव ब्रह्म परमं कवीनाम्। परमं यो महद्ब्रह्म।**

**'वासुदेवात्परः को नु ब्रह्मशब्दोदितो भवेत्।**

**स हिसर्वगुणैः पूर्णस्तदन्ये तूपचान्तः।**

**इति तस्मिन्नेव प्रसिद्धब्रह्मशब्दोपदेशात्॥ १॥**

सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षत इति ब्रह्मशब्दाभिधेयत्वश्रवणादत्र सर्वगतत्वेनोच्यमानो विष्णुरेव नादित्यः। अशरीरः प्रज्ञात्मेत्युपक्रमाच्च। न चादित्ये ब्रह्मशब्दः शङ्कनीयः। तदेव ब्रह्म परमं यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरः सदा। परमं यो महद्ब्रह्मेत्यादिवाक्येषु विष्णोरेव प्रसिद्धत्वात् नादित्यस्य मुख्यतो ब्रह्मत्वं युज्यते। हेत्वन्तरेणैतमर्थं साधयत्सूत्रमुपन्यस्य व्याचष्टे **विवक्षितेत्यादिना**।

## ॥ ॐ विवक्षितगुणोपपत्तेश्च ॥

**स ' योऽतोऽश्रुत' इत्यादि।**

**स हि 'न ते विष्णो जायमान' इत्यादिनाऽश्रुतत्वादिगुणकः।**

**स सविता स वायुः स इन्द्रः, सोऽश्रुतः सोऽदृष्टो यो हरिर्य परमो यो विष्णुर्योऽनन्तः' इत्यादि चतुर्वेदशिखायाम्॥ २॥**

एतमस्यामेतं दिवीत्यादिना यः प्रस्तुतः तस्य उपरि अश्रुतत्वादि गुणा वक्ष्यन्ते। स योऽतो श्रुतो गतो मतो नतो दृष्टो विज्ञातो नादिष्टः श्रोता-

मन्ताद्रष्टादेष्टाविज्ञाताप्रज्ञातेति । तत्र साकल्येन श्रोतुमशक्यत्वादयो युगपत्सर्वमन्तृत्वादयो गुणाः न हि विष्णुमन्तरेणान्यस्य सम्भाव्यन्ते । न ते विष्णो जायमानो न जातो देवमहिम्नः परमं तमाप । स सर्वविदित्यादिश्रुतेः श्रोतामन्तेत्यादिना श्रवणमननादिषु जीवश्रोत्रादिव्यवस्थाभावश्च विष्णोः प्रतिपाद्यते । सर्वतः पश्यति सर्वतः शृणोति विश्वतश्चक्षुरित्यादिश्रुतेः । नन्वेतमस्यामित्यादिना प्रस्तुतस्य चक्षुर्मयत्वादिजीवलिङ्गं श्रूयते । चक्षुर्मयः श्रोत्रमय इति । अतोऽत्र सर्वगतत्वेनोच्यमानो जीवः स्यात् । तस्यैतस्यासावादित्योरस इत्युपक्रमात् आदित्याख्यजीवविशेषो न विष्णुरिति चेन्मैवम् । सर्वेषु भूतेष्वेतमेवेति सर्वशरीराधिष्ठितत्वश्रवणाज्जीवस्यतदनुपपत्तेः । तदाह **न चेति** ।

**न चादित्यशब्दाच्चक्षुर्मयत्वादेश्च जीव इति राच्यम् ।**

## ॥ ॐ अनुपपत्तेस्तु न शारीरः ॐ ॥ ३ ॥

**एकस्य सर्वशरीरस्थत्वानुपपत्तेरेव ॥ ३ ॥**

हेत्वन्तरेणात्र सर्वगतत्वेन प्रतिपाद्यमानत्वं जीवस्य निषेधयत्सूत्रमुपन्यस्य व्याचष्टे **कर्मेत्यादिना** ।

## ॥ ॐ कर्मकर्तृव्यपदेशाच्च ॐ ॥ ४ ॥

**'आत्मानं परस्मै शंसति' इत्यादि ॥ ४ ॥**

## ॥ ॐ शब्दाविशेषात् ॐ ॥ ५ ॥

**'एतमेव ब्रह्मेत्याचक्षते' इति । न हि जीवमेव ब्रह्मेत्याचक्षते ।**

**'एष उ एव ब्रह्मैष उ एवात्मैष उ एव सवितैष उ एवेन्द्र एष उ एव हरिर्हरति परानन्दः' इति चेन्द्रद्युम्नशाखायाम् ॥ ५ ॥**

अत्र सर्वगतत्वेन प्रतिपाद्यमानस्यात्मनः कर्मत्वं जीवस्य कर्तृत्वं एकस्यां शंसनक्रियायां श्रूयते । आत्मानं परस्मै शंसतीति । तत्र यदि जीवः सर्वगतात्मत्वेन प्रतिपाद्येत तर्ह्येकस्यां क्रियायां कर्तृकर्मभावः स्यात् । नहि तथाविधः कर्तृकर्मभावो असति बाधके युज्यते । न च अन्यदन्यथासिद्धं जीवपरमात्मभेदस्य बाधकप्रमाणमुपलभ्यत इत्यर्थः । एतमेव ब्रह्मेत्यवधारण-बलेनोक्तमर्थं साधयत्सूत्रमुपन्यस्य व्याचष्टे **स्मृतेरित्यादिना** ।

**॥ ॐ स्मृतेश्च ॐ ॥ ६ ॥**

**'अहमात्मा गुडाकेश सर्वभूताशयस्थितः'** ।

**'गामाविश्य च भूतानि धारयाम्यहमोजसा' इत्यादि ।**

अहमात्मेति भगवत्स्मृतिसंवादादप्यत्र सर्वगत्वेनोक्तो विष्णुरेव । इतिहासपुराणाभ्यां वेदं समुमबृंहयेदिति भगवद्वचनादित्यर्थः । यज्जीव-निवारणेन विष्णोः सर्वगतत्वप्रतिपादनं तयोरपारमार्थिकभेदाभिप्रायमिति कस्यचित्कल्पनं तत्प्रमाणशून्यत्वादुपेक्षणीयमित्याह **न चेति** ।

**न चाप्रामाणिकं कल्प्यम् ॥ ६ ॥**

यच्चक्षुर्मयत्वादिजीवलिङ्गवचनं तस्य विष्णौ गतिं दर्शयत्सूत्रमुपन्यस्य व्याचष्टे **अर्भकत्यादिना** ।

**॥ ॐ अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॐ ॥ ७ ॥**

**सर्वेषु भूतेष्वित्यल्पौकस्त्वाच्चक्षुर्मयत्वादिना जीवव्यपदेशाच्च नेति चेन्न । अर्भकौकस्त्वेन चक्षुर्मयत्वादिरूपेण च तस्यैव विष्णोर्निचाय्यत्वात् । सर्वगतत्वेऽप्यल्पौकस्त्वं च युज्यते व्योमवत् ।**

**'सर्वेन्द्रियमयो विष्णुः सर्वप्राणिषु च स्थितः ।**
**सर्वनामाभिधेयश्च सर्ववेदोदितश्च सः' इति स्कान्दे ॥ ७॥**

जीवात्यन्तभिन्नस्यापि परमात्मनः सर्वशरीरेषु वसतस्तन्निमित्तभोगो जीववत्किं न स्यादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे **सम्भोगेत्यादिना** ।

## ॥ ॐ सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् ॐ ॥ ८ ॥

यथाग्निस्तम्भनसामर्थ्यवानग्नौ प्रतिक्षिप्तपाणिर्नाग्निना दह्यते एवं समर्थत्वाच्छरीरेषु वसतोऽपि न तन्निमित्तदुःखादिसम्बन्धो जीववद्विष्णोः शङ्कनीयः । तथा च उक्तं भागवते । यत्तदीशनमीशस्य प्रकृतिस्थोपि तद्गुणैः । न युज्यते सदात्मस्थैर्यथाबुद्धिस्तदाश्रयेति । अतोत्र सर्वगतत्वेन प्रतिपाद्यमान आदानयोगादादित्यनामको विष्णुरिति सिद्धम् ।

**जीवपरयोरेकशरीरस्थत्वे समानभोगप्राप्तिरिति चेन्न । सामर्थ्यवैशेष्यात् ।**

**उक्तं च गारुडे-**

**'सर्वज्ञल्पज्ञताभेदात्सर्वशक्त्यल्पशक्तितः ।**
**स्वातन्त्र्यपारतन्त्राभ्यां सम्भोगो नेशजीवयोः' इति च ॥ ८॥**

*॥ इति सर्वगतत्वाधिकरणम् ॥ १ ॥*

**'जन्माद्यस्य यतः' इत्युक्तम् । तत्रात्तृत्वं,**

**स यद्यदेवासृजत तत्तदत्तुमध्रियत । सर्वं वा अत्तीति तददितेरदितित्वम्' इत्यदितेः प्रतीयते ।**

**'स यद्यदेवासृजत' इति पुल्लिङ्गं च 'कूटस्थोऽक्षर उच्यते' इत्यादिवत् अत्रोच्यते**

बृहदारण्यके श्रूयते। स यद्यदेवासृजत तत्तदत्तुमध्रियत सर्वं वा अत्तीति तददितेरदितित्वमिति। तत्र जन्माद्यस्य यत इति परमेश्वरधर्मत्वेनोक्तं सर्व-संहर्तृत्वापरपर्यायं सर्वात्तृत्वं प्रतीयमानं विचार्यते। तत्रेदं तावददितेः प्रतिभाति तददितेरदितत्वमिति श्रवणात्। स इति पुल्लिङ्गनिर्देशोऽदितिविषयः कथमिति वाच्यम्। कूटस्थोक्षर उच्यत इति प्रकृतिविषयप्रयोगवदुपपद्यते इत्येतं पक्षं प्रतिक्षिपत्सूत्रमुपन्यस्य व्याचष्टे **अत्तेत्यादिना**।

## ॥ॐ अत्ता चराचरग्रहणात् ॐ॥ ९॥

**न हि चराचरस्य सर्वस्यात्तृत्वमदितेः।**

**'स्रष्टा पाता ततैवात्ता निखिलस्यैक एव तु।**

वासुदेवः परः पुंसामितरेऽल्पस्य वा न वा' इति स्कान्दे।

**'एकः पुरस्ताद्य इदं बभूव यतो बभूव भुवनस्य गोपाः।**
**यमप्येति भुवनं साम्पराये स नो हरिर्घृतमिहायुषेऽत्तु देवः'**

**इति श्रुतिः॥ ९॥**

स यद्यदेवेत्यादिनोक्तो विष्णुरेव। नादितिः। सर्वं वा अत्तीति सर्वात्तृत्व-श्रवणात्। नहि सचराचरविश्वं दक्षपुत्र्याऽदितिरत्ति। विष्णुरेव सर्वात्तेत्यत्र श्रुत्यन्तरं प्रमाणमाह एक इति। स एको भुवनगोप्ता पुरस्तादादौ बभूव यत इदं विश्वं बभूव यं च साम्पराये प्रलयकाले निगीर्णोदनवत्समस्तभुवनमप्येति प्रविशति। स देवो हरिरिह यज्ञेनोऽस्माकमायुरर्थं घृतमस्त्विति मन्त्रार्थः। तथाच श्रुत्यन्तरं यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः मृत्युर्यस्योपसेचनं क इत्थावेद यत्र सः इति। हेत्वन्तरेणोक्तार्थं साधयत्सूत्रमुपन्यस्य व्याचष्टे **प्रकरणादित्यादिना**।

॥ ॐ प्रकरणाच्च ॐ ॥ १० ॥

**अप्संवत्सरसृष्ट्यादिना तत्प्रकरणत्वाच्च।**

विष्णोरेव प्रकृतत्वात्सयद्यदेवेत्यादिना स एवादनाददितिशब्दोक्तः सर्वात्तोच्यते । न प्रसिद्धादितिः यो मृत्युर्मृत्युत्वेन प्रसिद्धो विष्णुस्तत्परमेवेदं प्रकरणमित्यत्र पुराणवाक्यान्युदाहरति **नेहासीदिति।**

**'नेहाऽसीत्किञ्चनाप्यादौ मृत्युरासीद्धरिस्तदा।**
**सोऽत्मनो मनसाऽस्राक्षीदप एव जनार्दनः ॥**

**शयानस्तासु भगवान्निर्ममेऽण्डं महत्तरम्।**
**तत्र संवत्सरं नाम ब्रह्माणमसृजत्प्रभुः ॥**

**तमत्तुं व्याददादास्यं तदाऽसौ विरुराव ह ॥**

**अथ तत्कृपया विष्णुः सृष्टिकर्मण्ययोजयत्।**
**सोऽसृजद् भुवनं सर्वमद्यार्थं हरये विभुः।**

**इति ब्रह्मवैवर्ते॥ १०॥**

*॥ इति अत्तृत्वाधिकरणम् ॥ २ ॥*

**सर्वात्तैकः पर उक्तः।**

**'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे।**

**छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिनाचिकेताः'।**

**इति पिबन्तौ प्रतीयेते। तौ काविति। उच्यते।**

यदुक्तं विष्णोः सर्वात्तृत्वं तत्र कर्मफलसारभोक्तृत्वापर पर्यायं पातृत्वं श्रूयते । ऋतं पिबन्तं सुकृतस्य लोक इति कण्ठवल्ल्याम् । तत्रात्तृत्वं विष्णोर्न

युज्यते । पिबन्ताविति द्विवचनासम्भवादित्येतं पक्षं प्रतिक्षिपत्सूत्रमुपन्यस्य व्याचष्टे **गुहामित्यादिना।**

## ॥ ॐ गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॐ ॥ ११ ॥

**गुहां प्रविष्टौ पिबन्तौ विष्णुरूपे एव।**

**'धर्मा समन्ता त्रिवृतं व्यापतुस्तयोर्जुष्टिं मातरिश्वा जगाम'**

**इत्यादिन तद्दर्शनात्।**

एकस्मिन्द्विरूपाभिप्रायेण विष्णौ द्विवचननिर्देशो युज्यते । तथाहि निर्दिश्यते श्रुत्यन्तरे घर्मेति । घर्माघृष्टौ दीप्तौ । एतयोः सेवां प्रति मुख्यवायुर्गतवानित्यर्थः मुख्यवायुसेव्यत्वादेव द्विरूपो विष्णुर्निर्दिश्यते । ऋतं पिबन्तावित्यस्य शुभऋतपातृद्विरूपविष्णुपरत्वे आगमवाक्यसंवाद-माह **आत्मेति।**

**'आत्माऽन्तरात्मेति हरिरेक एव द्विधा स्थितः।**
**निविष्टो हृदये नित्यं रसं पिबति कर्मजम्। इति**
**बृहत्संहितायाम्।**

**'शुभं पिबत्यसौ नित्यं नाशुभं स हरिः पिबेत्।**
**पूर्णानन्दमयस्यास्यचेष्टा न ज्ञायते क्वचित्' । इति पाद्मे ॥**

गुहां प्रविष्टौ परम इति विशोषितत्वात् ऋतं पिबन्तौ विष्णुरूपे एव भवितुमर्हतः। सत्यं ज्ञानमनन्तं ब्रह्म। यो वेदनिहितं गुहायां परमे व्योमन्नित्यादि गुहानिहितत्वेन प्रसिद्धत्वादित्येतदुक्तं सूत्रगत हि शब्देनाह **यो वेदेति।**

**'यो वेद निहितं गुहायाम्'**
**इत्यादिना प्रसिद्धं हि शब्देन दर्शयति॥ ११ ॥**

अक्षरं ब्रह्म यत्परमिति ब्रह्मशब्देन विशेषितत्वादपि ऋतपातृत्वं द्विरूपविष्णोरित्येतत्प्रतिपादयत्सूत्रमुपन्यस्य व्याचष्टे **विशेषणादित्यादिना।**

**॥ ॐ विशेषणाच्च ॐ ॥ १२ ॥**

**'यः सेतुरीजानानामक्षरं ब्रह्मतत्परम्' इति।**

ब्रह्मशब्दस्य विष्णवेकपरत्वं पुराणवचनेन प्रतिपादयति। **पृथगिति।**

**'पृथग्वक्तुं गुणास्तस्य न शक्यन्तेऽमितत्वतः।**
**यतोऽतो ब्रह्मशब्देन सर्वेषां ग्रहणं भवेत्।**

**एतस्माद्ब्रह्मशब्दोऽयं विष्णोरेव विशेषणम्।**
**अमिता हि गुणा यस्मान्नान्येषां तमृते विभुम्॥' इति ब्राह्मे।**

गुहां प्रविष्टाविति जीवपरमात्मानावभिधीयेते इति वदन्तं प्रत्याह **न जीवे समन्वय इति।**

**न च जीवे समन्वयोऽभिधीयते।**

ननु जीवस्य परमात्माभिन्नत्वेन परमात्मवज्जीवेपि श्रुतिसमन्वय-प्रतिपादनं न पूर्वसङ्गतमित्याशङ्क्य श्रुतिपुराणवचनैः परिहरति । **सत्य इत्यादिना।**

**'सत्य आत्मा सत्यो जीवः सत्यं भिदा सत्यं भिदा सत्यं भिदा मैवारुवण्यो मैवारुवण्यो मैवारुवण्य' इति भाल्लवेयश्रुतिः।**

**'आत्मा हि परमस्स्वतन्त्रोऽधिगुणो जीवोऽल्पशक्तिरस्वातन्त्रोऽवर इति च भाल्लवेयश्रुतिः।**

**यथेश्वरस्य जीवस्य भेदस्सत्यो विनिश्चयात्।**
**एवमेव हि मे वाचं सत्यां कर्तुमिहार्हसि' ॥**

**'यथेश्वरश्च जीवश्च सत्यभेदौ परस्परम्।**
**तेन सत्येन मां देवास्त्रायन्तु सहकेशवाः ॥'**

**इत्यादेर्नासत्यो भेदः ॥ १२ ॥**

अरुर्व्रणापरपर्यायः । स्वदोषदर्शिभिः आरुभिः वन्योवननीयो भजनीयो नैव भवति । विष्णोर्निरवद्यस्य स्वदोषज्ञानिषु प्रीत्यभावात् । अतो दोषिभ्यो जीवेभ्यो अत्यन्तभिन्नतया जानद्भिरेव विष्णुर्भजनीयो नान्यथेत्यर्थः ।

*॥ इति गुहाधिकरणम् ॥ ३ ॥*

**आदित्ये विष्णुरित्युक्तम्।**

**'य एष आदित्ये पुरुषः सोऽहमस्मि स एवाहमस्मि (छा.४-११)'**

**इत्यादावग्नीनामेवादित्यस्थत्वमुच्यते। अतोऽक्ष्यादित्ययोरैक्यात्**

**'य एषोऽन्तरक्षिणि पुरुषो दृश्यते ( छा. ४-१५) ' इत्यत्राप्यग्निरेवोच्यते। अतः**

**'तद्यथा पुष्कर पलाश आपो न श्लिष्यन्त**

**एवमेवं विदि पापं कर्म न श्लिष्यते (छा.४-१४)'**

**इत्यग्निज्ञानादेव सर्वपापाश्लेषान्मोक्षोपपत्तिरिति। अतो ब्रवीति।**

इदमाम्नायते । य एषोन्तरक्षिणि पुरुषो दृश्यत एष आत्मेति । अत्रात्मेतिशब्दनिर्दिष्टोऽक्षिस्थपुरुषः कोऽयमिति विचार्यते । अत्राधस्तन-वाक्यादादित्यस्थः पुरुषः तावदग्निरेवावगम्यते। अथ हैनं गार्हपत्योनुशशास य एष आदित्ये पुरुषो दृश्यते सोहभस्मीति स एवाहभस्मीति स यथा चन्द्रस्थपुरुषोन्हिविशेषावगतोऽथहैनमन्वाहार्य पचनोऽनुशशास य एष चन्द्रमसि पुरुषो दृश्यते सोऽहमस्मीति । आदित्यस्थपुरुषस्यवाक्षिस्थ-पुरुषत्वेनाक्ष्यादित्यैक्यस्यानेकश्रुतिसिद्धत्वादग्निरेवायमक्षिस्थपुरुषः स्यात् ।

अतश्च यश्चासावादित्य इत्यादिना यदादित्याधिष्ठातृत्वमुक्तं विष्णोस्तदप्यग्नेरेव समायातम् । यद्विष्णुज्ञानमेव मोक्षसाधनं प्रतिपादितम् । तमेवं विद्वानमृत इह भवति । नान्यः पन्था इत्यादिना तदपि न सिध्यति अक्षिस्थपुरुषाग्निविदो मोक्षश्रवणात् । एवमेवंविदि पापं कर्म न श्लिश्यत इत्येवं पूर्व पक्षयति आदित्य इति । अत्र सूत्रमवतार्य वाचष्टे **अन्तरित्यादिना** ।

**॥ ॐ अन्तर उपपत्तेः ॐ ॥ १३ ॥**

**चक्षुरन्तस्थो विष्णुरेव । 'त्रिपादस्यामृतं दिवि (ऋ. १०-१०-३)' इत्यादिना तस्यैवामृत्वाद्युपपत्तेः । ब्रह्मशब्दाद्युपपत्तेश्च ।**

अक्षिस्थपुरुषोऽयं विष्णुरेव एष आत्मेति होवाच एतदमृनमेतदभयमेतद्ब्रह्मेति श्रूयमाणत्वात् अमृतत्वादिकं विष्णोरेव श्रूयते । त्रिपादस्यामृतं दिवीत्यादिश्रुत्यन्तरे । न च विष्णुवदग्नेरप्यमृतत्वं शङ्कनीयम् । तमेताः पञ्चदेवताः परिम्रियन्ते विद्युद्वृष्टिश्चन्द्रमा आदित्योग्निः भयादग्निः तपतीत्यादि श्रुतिविरोधात् । एतद्वाक्यमग्निप्रापकमुक्तं तदन्यथोपपन्नमित्याह **'सोऽहमिति'** ।

**'सोऽहमस्मि' इत्यादित्वन्तर्याम्यपेक्षया ।**

**'अन्तर्यामिणमीशेशमपेक्ष्याहं त्वमित्यपि ।**
**सर्वे शब्दाः प्रयुज्यन्ते सति भेदेऽपि वस्तुषु'**

**इति महाकौर्मे ॥ १३ ॥**

इतोऽप्यक्षिस्थपुरुषो विष्णुरेवेत्येतत्प्रतिपादकं सूत्रमुपन्यस्य व्याचष्टे **स्थानादित्यादिना** ।

**॥ ॐ स्थानादिव्यपदेशाच्च ॐ ॥ १४ ॥**

**'तद्यदस्मिन् सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव गच्छति (छा. ४-१५)' इत्यादिस्थानशक्तिः ।**

**'वामनिर्भामनिः' इत्याद्यात्मशक्तिश्चोच्यते। तस्य ह्येतल्लिङ्गम्।**

अयमर्थः । असङ्गो विष्णुरेव अक्षिस्थ पुरुष इति ज्ञापयितुं स्थानस्य चक्षुषोऽसङ्गत्वं निर्दिश्यते । चक्षुषि सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव गच्छतीति तथा एष उ एव भामनिरेष हि सर्वाणि वामानि नयति एष उ एव भामनिरेष हि सर्वेषु लोकेषु भातीत्यक्षिस्थः पुरुषः परमात्मधर्मविशिष्टत्वेनोच्यते। अयमुक्तलक्षणो विष्णुरेवेत्यत्र श्रुत्यन्तरं दर्शयति **स ईश इति**।

**'स ईशः सोऽसपत्नः स हरिः स परः परोवरीयान् यदिदं चक्षुषि सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव गच्छति स वामनः भामनः स आनन्दः सोऽच्युतः'**

**इति चतुर्वेदशिखायाम्।**

**'यत्स्थानत्वादिदं चक्षुरसङ्गं सर्ववस्तुभिः।**

**स वामनः परोऽस्माकं गतिरित्येत् व चिन्तयेत्'**

**इति वामने॥ १४॥**

कं ब्रह्म खं ब्रह्मेति यो बृहत्सुखज्ञानः परमात्मा प्रकृतः स एवाक्ष्यन्तरपुरुषोऽभिधीयते। अतोऽपि नाग्निरत्रोच्यत इत्येवं व्याचष्टे **सुखेति**।

## ॥ ॐ सुखविशिष्टाभिधानादेव च ॐ ॥१५॥

**'प्राणो ब्रह्मकं व ब्रह्म (छा. ४-१०)' इति,**

सूत्रमुपन्यस्य बृहत्सुखो विष्णुरेवेत्येतद्वाक्यान्तरैर्द्रढयति **विज्ञानमित्यादिना**।

**'विज्ञानामानन्दं ब्रह्म (बृ. ५-९-२८)'**

**'आनन्दो ब्रह्मेति व्यजानात् (तै. ३-६)'**

**इत्यादेस्तस्यैव हि तल्लक्षणम्।**

**'लक्षणं परमानन्दो विष्णोरेव न संशयः।**
**अव्यक्त्यादितृणान्तास्तु विप्लुडानन्दभागिनः' इति ब्रह्मवैवर्ते॥**

नन्वन्वेरीषत्सुखात्मकत्वसम्भवात्तत्परित्यागः कथमित्यत आह **न चेति।**

**न च मुख्ये सत्यमुख्यं युज्यते॥१५॥**

स एनान् ब्रह्म गमयतीति अक्षिस्थपुरुषज्ञानाद्ब्रह्मगमनश्रवणादप्यसौ विष्णुरेव नाग्निः। न ह्यग्निविद्यया विष्णुगतिर्युज्यते। यान्ति देवव्रता देवान् पितॄन् यान्ति पितृव्रताः। भूतानि यान्ति भूतेज्याः यान्ति मद्याजिनोपि मामिति भगवद्वचनविरोधादित्येतमर्थं सूत्रेण दर्शयति **श्रुत्येत्यादिना।**

**ॐ श्रुतोपनिषत्कगत्यभिधानाच्च ॐ॥ १६॥**

**'स एनान्ब्रह्म गमयति (छा. ४-१५)' इति।**
**न ह्यन्यविद्यया अन्यगतिर्युक्ता॥ १६॥**

युक्त्यन्तरबलादप्यादित्येक्षिणि च नियामकत्वेन स्थितो यः चक्षुषि तिष्ठन्नित्यादिश्रुत्यन्तरे सिद्धो नाग्निरित्येतत्प्रतिपादयत्सूत्रमुपन्यस्य व्याचष्टे **अनवस्थितेरित्यादिना।**

**॥ ॐ अनवस्थितेरसम्भवाच्च नेतरः ॐ॥ १७॥**

**जीवस्य जीवान्तरनियामकत्वेऽनवस्थितेः, साम्यादसम्भवाच्च न जीवः। नियमप्रमाणाभावात्। अनीश्वरापेक्षत्वाच्च॥ १७॥**

अस्यार्थः । यथा जनपदनियोजितस्य तत्प्रजानां च नियम्य-नियामकभावः क्षितिपत्यधीनः । एवमग्न्यादित्यादीनां जीवानां परस्परनियामकभावश्चेदसौ सर्वेशाऽऽज्ञाधीन एव भवेत् । अन्यथैकस्य जीवस्यान्येन जीवेन नियम्यत्वे, तस्याप्यन्येन जीवेन नियम्यत्वं तस्याप्यन्येनेत्यनवस्था स्यात् । जीवत्वाविशेषान्नियम्यनियामकभावा-सम्भवश्च स्यात् तेषाम् । नचेश्वराज्ञानिरपेक्षत्वेन कस्यचित् जीवस्य नियम्यत्वं कस्यचित् नियामकत्वामित्यत्र प्रमाणमस्ति । अत उक्तहेतुभ्यां-मुख्यनियामकस्य पुरुषोत्तमान्यस्यासम्भवात् । असावेव दिव्यदृष्टि-गोचरोक्ष्यन्तरपरुष इति सिद्धम्

*॥ इत्यन्तराधिकरणम् ॥*

एतदमृतमभयमिति यदक्ष्यन्तरपुरुषस्य विष्णुत्वसाधकममृतत्वमुक्तं तदन्तर्यामिणः श्रूयते । एष त आत्मान्तर्याम्यमृत इति अन्तर्यामी विष्णोरन्य प्रतीयत इत्याशङ्क्य विष्णुरेवान्तर्यामीति प्रतिपादयितुमुत्तराधिकरणमारभ्यते । **"यः पृथिव्यां तिष्ठन्निति"** ।

**'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः (बृ. ५-७-३)' इत्यादिनाऽन्तर्याम्युच्यते।**

**तत्र च 'एतदमृतं (छा.४-१५-१)' इत्युक्तममृतत्वमुच्यते। स च**

**'यस्य पृथिवी शरीरम्' इत्यादिना सर्वात्मकत्वात्प्रकृतिस्तत्तज्जीवा ऽवा युक्तः।**

**न हि विष्णोः पृथिव्यादिशरीरत्वमङ्गीक्रियत इत्यत आह॥**

**॥ ॐ अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॐ॥ १८ ॥**

**'यं पृथिवी न वेद, यः पृथिव्या अन्तरः (बृ. ५-७-३)'**

**इत्यादिना अधिदैवादिषु तद्धर्मव्यपदेशात् विष्णुरेवान्तर्यामी। स हि**

**'न ते विष्णो जायमानो न जातः(ऋ.७-९९-२)'।**

**'स योऽतोऽश्रुतोऽगतो-ऽमतोऽनतोऽदृष्टोऽविज्ञातोऽमादिष्टः सर्वेषां भूतानाम् अन्तरपुरुषः (ऐ.आ.३-२-४)'**

**इत्यादिनाऽविदितोऽन्तरश्च॥ १८॥**

**ॐ न च स्मर्तमतद्धर्माभिलापात् ॐ ॥ १९ ॥**

**त्रिगुणत्वादिप्रधानधर्मानुक्तेर्न स्मृत्युक्तं प्रधानमन्तर्यामी॥ १९॥**

यं पृथिवी न वेद पृथिवी देवता न वेदेत्यर्थः। **उभयेपीति**।

**ॐ शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ॐ ॥ २० ॥**

**'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः (बृ. माध्यन्दिनपाठः)'। 'यो विज्ञाने तिष्ठन् विज्ञानादन्तरो यं विज्ञानं वेद यस्य विज्ञानं न शरीरम् (ब्र. ५-७-२२)' इत्युभयेऽपि हि शाखिनो भेदेनैनं जीवमधीयते।**

काण्वमाध्यन्दिनायनाश्चान्तर्यमिणः सकाशाज्जीवमधीयत इत्यर्थः। यस्य पृथिवी शरीरमित्यादिषु शरीरशब्दो न भोगायतनादित्वाभिप्रायः किन्तु यौगिक इत्याह **शीर्यत इति**। (१।२।५।)

**'शीर्यते नित्यमेवास्माद् विष्णोस्तु जगदीदृशम्। रमते च परोह्यस्मिन् शरीरं तस्य तज्जगत्' इति वचनान्न शरीरत्वविरोधः॥ २०॥**

*॥ इति अन्तर्याम्यधिकरणम्॥ ५॥*

**अदृश्यत्वादिगुणा विष्णोरुक्ताः । तत्र 'यत्तदद्रेश्यमग्राह्य मगोत्रमवर्णमचक्षुः श्रोत्रं तदपाणिपादम् । नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्तिधीराः (मु.१-१-६)' इत्युक्त्वा यथोर्णनाभिस्सृजते गृण्हते च यथा पृथिव्यामेषधयः सम्भवन्ति । यथा सतः पुरुषात्केशाचोमानि तथाऽक्षरात्संभवतीह विश्वमित्युक्त्वा तस्माच्च 'अक्षरात्परतः परः (२-१-२)' इति परः प्रतीयत इत्यतोऽब्रवीत्**

अदृश्येनात्म्य इत्यादिना अदृश्यत्वादिगुणा विष्णोरुक्तस्तेचाथर्वणे अक्षरम्योच्यन्ते । यत्तदद्रेश्यमग्राह्यमिति । नचैतदक्षरं विष्णुः । तस्यै तस्मात्परत्वेन श्रूयमाणत्वात् । अक्षरात्पन्तः पर इति एवं प्राप्ते सूत्रमवतारयति । **अदृश्यत्वेति ।**

## ।। ॐ अदृश्यत्वादिगुणको धर्मोक्तेः ॐ ।। २१।।

**पृथिव्यादिदृष्टान्तमुक्त्वा 'अक्षरात्सम्भवतीह विश्वम् (मु. १-१-७)' इत्यतः परं'तत्पन्तः पराभिधानात्, 'कूटस्थोऽक्षर उच्यते (भ.गी.१५-१६)' इति स्मृतेश्च प्रकृतेः प्राप्तिः ।**

**ब्रह्मशब्दात्तत्पन्तः पराभिधानादेव च हिरण्यगर्भस्य । 'तमेवं विद्वानमृत इह भवति ( तै.आ. ३-१२-७)' । 'तत्कर्म हरितोषं यत्सा विद्या तन्मतिर्यया ' अथ द्वे वाव विद्ये वेदितव्ये परा चैवापरा च । तत्र ये वेदा यान्यङ्गानि यान्युपाङ्गनि यानि प्रत्यङ्गानि साऽपरा । अथ परा यया स हरिर्वेदितव्यो योऽसावदृश्यो निर्गुणः परः परमात्मा इत्यादिना तद्धर्मत्वनावगतपरविद्याविषयत्वोक्तेः विष्णुरेवादृश्यत्वाद्धिगुणकः ।। २१ ।।**

अदृश्यत्वादिगुणकमक्षरं विष्णुरेव न प्रकृतिहिरण्यगर्भाविति प्रतिपिपादयिषया प्रसक्तिं दर्शयति । पृथिव्यादीत्यादिना । अस्यार्थः । पृथिवी

दृष्टान्तेन विनिश्चयोह्यक्षरमुच्यमानं प्रकृतिर्भवेत् । कूटस्थोक्षर उच्यते । उतमपुरुषस्त्वन्यः इति स्मृत्या प्रकृतेरक्षरत्वेनोच्यमानत्वात् । ब्रह्मादेवानां प्रथमः संबभूव विश्वस्य कर्ता भुवनस्य गोप्ता स ब्रह्मविद्यां सर्वविद्या-प्रतिष्ठामाथर्वायं, ज्येष्टपुत्राय, प्राहेत्युपक्रम्य, श्रूयमाण मदृश्यत्वादिगुणकमक्षरं हिरण्यगर्भो वा भवेत् । तस्मिन्नपि ब्रह्मशब्द सम्भवात् पुरुषोत्तमस्त्वेतदक्षरं न भवत्येव । तस्मात्परत्वे नोपरि श्रूयमाणत्वादि त्येतन्निषेधयति । तमेवे-त्यादिना । अस्यार्थः । अथ परा ययातदक्षरमधिगम्यते यत्तदद्रेश्यमिति परविद्याविदित्वेनोक्तत्वाद्विष्णुरेवादृश्यत्वादि गुणकोऽक्षरः । परविद्या-विषयत्वस्य तमेवं विद्वानमृत इह भवतीत्यादि वाक्यान्तरेषु विष्णवेकनिष्ठत्वेन तद्धर्मत्वेनोक्तत्वात् । वेदानामपरविद्याविषयत्वं यज्ञाद्यर्थांतरविषयन्वविवक्षया तेषामेव परविद्या विषयत्वं विष्णुविषयत्वविवक्षयेत्यवगन्तव्यम् । तदुक्तम् परमसंहितायाम् । ऋगाद्या अपराविद्या यदा विष्णोर्नवाचकाः । ता एव परमाविद्या यदा विष्णोस्तु वाचका इति । विष्णुरेवाद्दृश्यत्वादिगुणकाक्षरं न प्रकृतिहिरण्यगर्भावित्येतद्धेत्वन्तरेण सूत्रमुपन्यस्य साधयति । **विशेषणे-त्यादिना ।**

## ॐ विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॐ ॥२२॥

**'यस्सर्वज्ञस्सर्वविद्यस्यज्ञानमयं तपः (मु. १-१-९) इतिविशेषणान्न प्रकृतिः ।**

**'तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते (मु.१-१-९)' इति भेदव्यपद्शान्न विरिञ्चः ।**

यः सर्वज्ञइत्यादिवदक्षरात्पन्तः परइति विशेष्यमाणत्वादप्यद्दृश्यत्वादि-गुणकाक्षरं विष्णुः । विश्वयोन्यक्षरस्यावरत्वासम्भवात् । अक्षरात्पन्तः पर इत्यवधित्वेनोच्यमानमक्षरं तस्**मादन्यदेव** । तदेतदाह **अपरमिति** ।

'अपरं त्वक्षरं या सा प्रकृतिर्जडरूपिका।
श्रीः परा प्रकृतिः प्रोक्ता चेतना विष्णुसंश्रया॥

तामक्षरं परं प्राहुः परतः परमक्षरम्।
हरिमेवाखिलगुणमक्षरत्रयमीरितम्' ॥ इति स्कान्दे

त्र्यक्षराभिधानादक्षरात्परतः पर इत्यपि विशेषणमेव॥

'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः (मु.३-१-२)' इति भेदव्यपदेशादीशपदप्राप्तोऽपि न रुद्रः॥ २२॥

न च कर्तारमीशमिति विशेष्यमाणत्वाददृश्यत्वादिगुणकमक्षरं रुद्र इति वाच्यम्। यदा पश्यत्यन्यमीशमित्यज्ञप्रसिद्धेशादन्यस्य विष्णोरेव विवक्षितत्वादित्याह जुष्टमिति। विष्णुरेवोत्रोच्यत इत्येतद्युक्त्यन्तरेण साधयत्सूत्रमुपन्यस्य व्याचष्टे। रूपेत्यादिना। प्राकृताकाररहितत्वेनावर्णमचक्षुःश्रोत्रमित्युक्तोप्यप्राकृतरूपवत्वेन मुख्यरूपवान्विष्णुरेवात्रोच्यत इत्यर्थः।

## ॐ रूपोपन्यासाच्च ॐ॥ २३॥

'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्
(मु.३-१-३)' इति।

'एको नारायण आसीन्न ब्रह्मा न शङ्करः समुनिर्भूत्वा समचिन्तयेत्। तत एते व्यजायन्त विश्वो हिरण्यगर्भोऽग्निर्यमो वरुणरुद्रेन्द्राः इति।

तस्य हैतस्य परमस्य नारायणस्य चत्वारि रूपाणि। शुक्लं रक्तं रौक्मं कृष्णमिति। स एतान्येतेभ्योऽभ्यचीक्लृपत्। विमिश्राणिव्यमिश्रयत्'। अत एतादृगेतद्रूपमिति तस्यैव हि रूपाण्यभिधीयन्ते॥ २३॥

*॥ अदृश्यत्वाधिकरणम्॥ ६॥*

**अदृश्यत्वादिगुणेषु सर्वगतत्वं 'यस्त्वेतमेवं प्रादेशमात्रमभिविमान मात्मानं वैश्वानरमुपास्ते'**

**इति वैश्वानरस्योक्तमित्ये आह—**

**॥ ॐ वैश्वानरःसाधारणशब्दविशेषात् ॐ ॥ २४ ॥**

**अग्निविष्णोः साधारणस्य वैश्वानरशब्दस्य विष्णावेव प्रसिद्धात्म-शब्देन विशेषणाद्वैश्वानरो विष्णुरेव ॥ २४ ॥**

**ॐ स्मर्यमाणमनुमानं स्यादिति ॐ ॥ २५ ॥**

**'अहं वैश्वाहरो भूत्वा प्रणिनां देहमाश्रितः (भ.गी १५-१४)'**

**इति स्मर्यमाणमत्रापि स एवोच्यत इत्यस्यानुमापकम्। समाख्यानात्। इति शब्दः समाख्याप्रदर्शकः ॥ २५ ॥**

गताधिकरणेनोत्तराधिकरणस्याक्षेपिकीं सङ्गतिं दर्शयति। अदृश्यत्वेति। नित्यं विभुं सर्वगतमिति यत्सर्वगतत्वमुक्तं तन्न विष्णोरेव । श्रुत्यन्तरे वैश्वानरस्योच्यमानत्वात् । अभितोविगतमानत्वेनाभिविमानमात्मानं वैश्वा-नरमिति वैश्वानराग्नाविव विष्णवावपि स एष वैश्‍ानरो विश्वरूप इत्यादिना प्रयुक्तत्वात्साधारणो न विष्णोरेवावगमक इति प्राप्ते सूत्रं **पठित्वाव्याचष्टे** । वैश्वानर इत्यादिना । वैश्वानर शब्द प्रतिपाद्यो विष्णुरेवेत्येतद्भगवद्वाक्यस्य संवादेन दर्शयत् सूत्रं **पठित्वा व्याचष्टे** । स्मर्यमाणमित्यादिना । समाख्यानं व्याख्यानं। उक्तार्थमाक्षिप्य समर्थयत्सूत्रं पठित्वा व्याचष्टे। **शब्दित्यादिना।**

**ॐ शब्दादिभ्योऽन्तः प्रतिष्ठानान्नेति चेन्न तथा दृष्ट्युपदेशादसम्भवात्पुरुषविधमपि चैनमधीयते ॐ ॥ २६॥**

**'अयमग्निर्वैश्वानरः (बृ.७-९-१)।**

'वैश्वानरमृत आ जातमग्निम् (ऋ. ६-७-१)' इत्यादिशब्दः।

'वैश्वानर तद्धुतं भवति (छा.५-२४-४)'।

'हृदयं गार्हपत्यो मनोऽन्वाहार्यपचनः आस्यमाहवनीयः (छा.५-१८-२)'

इत्याद्यग्निलिङ्गमादिशब्दोक्तम्।

'येनेदमन्नं पच्यते (बृ. ७-९-१)'।

'तद्यद्भक्तं प्रथममागच्छेत् तध्दोमीयम् (छा.५-१९-१)'

इत्यादिना पाचकत्वेनान्तःप्रतिष्ठानं च प्रतीयते । तस्मान्न विष्णुरिति चेन्न।

'अथ हेममात्मानमणोरणीयांसं परतः परं विश्व हरिमुपासीतेति । सर्वनामा सर्वकर्मा सर्वलिङ्गः सर्वगुणः सर्वकामः सर्वधर्मः सर्वरूपः' इति।

'स य एतमेवमात्मानं विश्वं हरिमारादरमुपास्ते तस्य सर्वेषुलोकेषु भूतेषु देवेषु सर्वेषु वेदेषु कामचरोभवति'

इति तत्तन्नामलिङ्गादिना तस्यैव दृष्ट्युपदेशान्महोपनिषदि॥

'अनात्तत्वादनात्मान ऊनत्वाद्गुणराशितः।
अब्रह्माणः परे सर्व ब्रह्मात्मा विष्णुरेव हि' ॥

इत्यादिना 'को न आत्म किं ब्रह्म (छां. ५-११-१)'

इत्यारम्भाच्च अन्येषामसम्भवाद्विष्णुरेव वैश्वानरः।

''चन्द्रमा मनसो जातश्चक्षुस्स्सूर्यो अजायत— (तै. आ ३-२२)'

इत्यादिना यः पुरुषाख्यो विष्णुरभिहितस्तद्विधमेवात्र

**'मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मा (छा.५-१८-२)' इत्यादिनैनं वैश्वानरमधीयते। चशब्देन सकलवेदतन्त्रपुराणादिषु विष्णु-परत्वं पुरुषसूक्तस्य दर्शयति। तथा च ब्राह्मे—**

**'यथैव पौरुषं सूक्तं नित्यं विष्णुपरायणम्।**
**तथैव मे मनो नित्यं भूयाद्विष्णुपरायणम्' इति॥**

**चतुर्वेदशिखयां च—**

**'सहस्रशीर्षा पुरुषस्सहस्राक्षस्सहस्रपात' इति। एष ह्येवाचिन्त्यः परः परमो हरिरादिरनादिरनन्तोऽनन्ताक्षोऽनन्तबाहुरनन्तगुणोऽनन्तरूपः' इति। बृहत्संहितायां च—**

**'यथा हि पौपुषं सूक्तं विष्णोरेवाभिधायकम्।**
**न तथा सर्ववेदाश्च वेदाङ्गानि च नारद' इत्यादि।**

**'यस्मान्यज्जायते चाङ्गाल्लोकवेदादिकं हरेः।**
**तन्नामवाच्यमङ्गं तद्यथा ब्रह्मादिकं मुखं'**

**इति नारदीयवचनान्नाभेदोक्तिविरोधः॥ २६॥**

अस्यार्थः । आत्मानं वैश्वानरमित्यात्म शब्देन विशोषितोप्ययं वैश्वानरविद्यप्रतिपाद्यो न विष्णुः अयमग्निर्वैश्वानरः वैश्वानरमृत आजातमग्नि-मित्यादिनाग्निशब्देन विशोष्यमाणत्वात् । लिङ्गवशादप्यरिपरेवात्र वैश्वानरः । **तथाहि** । वैश्वानरे तद्भुतं भवतीति हविराधारत्वमात्मनो वैश्वानरस्येत्यारभ्य हृदयं गार्हपत्यं इत्युच्यमानमप्यग्निलिङ्गं 'अयमग्निर्वैश्वानरो येनेदमन्नं पच्यते तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयं प्रथममाहुतिं जुहुयात्तांजुहुयात्प्राणायस्वाहेत्यादि शरीरान्तरस्थिताग्निधानान्येते युज्यते । 'अथ हेममात्मानमित्यादि महोपनिषद्वाक्ये अग्न्यादिनामभिः पाचकत्वादिधर्मैर्विष्णूपास्तेरुपदिष्टत्वेनात्र वन्ह्यादिप्रापकशब्दलिङ्गाभावात् । अरमत्यन्नमित्यर्थः । को न आत्मा किं

ब्रह्मेत्युपक्रम्य निरूप्यमाणत्वादयं वैश्वानरो विष्णुरेव नाग्निः । अनात्तत्वादिवाक्येन आत्मब्रह्मशब्दयोः विष्णवन्यत्रासम्भावितत्वस्य कथनात्पुरुषसूक्तसंवादादप्यत्र वैश्वानरशब्देन विष्णुरेवोच्यते । **तथाहि** । 'चन्द्रमा मनसो जातः चक्षोरस्सूर्यो अजायते'त्यादि पुरुषसूक्तवाक्येन यः सहस्रशीर्षा पुरुष उक्तः स एवात्र प्रत्यभिज्ञायते आत्मनो वैश्वानरस्य 'मूर्धैव सुतेजाः चक्षुः विश्वरूप' इत्यादिना । पुरुषसूक्तस्य विष्ण्वेकपरत्वं सकलवेदेतिहासादिषु अविगानसिद्धं तथाह्युक्तम् । 'यथैव पौरुष'मित्यादिभिः । पुराणवाक्यैः पुरुषावयवेभ्यो भेदेन निर्दिष्टानां द्युलोकादीनां वैश्वानरमूर्धादिभिरभेदेन व्यपदेशस्य गतिच्यते यस्मादित्यनेन । यस्माद्यस्माद्विष्णवङ्गाद्यल्लोकादिकं जायते तत्तन्नाम्ना तज्जनकमङ्गमुच्यते । अतो मूर्धैवसुतेजा इत्यादि व्यपदेशो घटते । यथा 'ब्राह्मणोऽस्य मुखमासीद्बाहूराजन्यः कृत' इत्यादौ ब्राह्मणादिजनकेषु मुखादिषु ब्राह्मणादिपदव्यपदेशः । न हि अत्र पुरुषोत्तममुखादिभिरभेदो ब्राह्मणादीनामुच्यते । पद्भ्यां शूद्रो अजायत इत्यादिवाक्यशेषविरोधात् । अर्थान्तरशब्दानां भगवदवयवेषु वृत्तिः विद्वद्रूढ्या योगवृत्त्या वा अवगन्तव्येत्यर्थः ।

अग्निर्वैश्वानरादिशब्दानां याऽर्थान्तरे प्रसिद्धिः सा सूत्रोक्तहेतुना बाध्यते इत्येतत्प्रतिपादकं सूत्रं पठित्वा व्याचष्टे **अत एवेत्यादिना** ।

## ॐ अत एव न देवता भूतं च ॐ

**अग्निवैश्वानरादिशब्दस्तेजसि भूते अग्निदेवतायां च प्रसिद्धोऽप्यतः पूर्वोक्तहेतुत एवात्र न सा तच्चाभिधीयते ॥ २७ ॥**

इतोऽप्यग्न्यादिशब्दैरभिधेयो विष्णुः मुख्यार्थत्वात् । अगनेता ह्यग्निः । विश्वनरनेतृत्वाद्वैश्वानरः । स च मुख्यतो विष्णुरेव । न हि असतिबाधके मुख्यार्थः परित्यज्यते इत्येतत्प्रतिपादकं सूत्रमनूद्य व्याचष्टे **साक्षादित्यादिना** ।

## ॐ साक्षादप्यविरोधं जैमिनिः ॐ ॥ २८ ॥

**नाग्नयादयः शब्दा अग्न्यादिवाचकाः तथापि साक्षादेवानन्ययोगेन ब्रह्मवाचकैश्शब्दैः व्यवहारार्थमनभिज्ञानाच्चान्यत्र व्यवहरन्तीत्यभ्युपगमे अविरोधं जैमिनिर्वक्ति।**

अर्थान्तराव्यवधानेन विष्णुवाचिनामग्न्यादिशब्दानां ज्वलनादिष्वेव प्रयोगस्तु मुख्यार्थविष्ण्वपरिज्ञानात् । मुख्यार्थज्ञानिनस्तु अजामिलश्वरमसुते नारायणशब्दवत् अग्न्यादिशब्दान् ज्वलनादिषु व्यवहारार्थं प्रयुञ्जत इत्यर्थः । ' साक्षादप्यविरोधं जैमिनिरित्यादि मतानुवादः स्वमतैकदेशत्वेन क्रियते न पूर्वपक्षत्वेन अनिराकृतत्वात्। तथाहि पुराणवचनम् **व्यासेति**।

**'व्यासचित्तस्थिताकाशादवच्छिन्नानि कानिचित्।**
**अन्ये व्यवहरन्त्येतान्यूरीकृत्य गुहादिवत्' ॥**

**इति स्कान्दवचनान्न मतानां परस्परविरोधः॥ २८॥**

आकाशवव्द्यासस्य प्रकाशमानस्य वेदव्यासस्य मतस्यैकदेशान् स्वस्वमत्या व्यवच्छेद्येदं मटीयमिदं मदीयमित्यन्ये जैमिन्यादयो व्यवहरन्ति । (यथा गृहमठाद्याकाशप्रदेशानवच्छिद्य अयं मदीयप्रदेशोऽयं मदीयप्रदेश इति जना व्यवहरन्ति इत्यर्थः ।) छान्दोग्यादिवैश्वानरविद्यावदग्न्यादिसूक्तानां विष्णुपरत्वमभ्युपगतं । 'विश्वेदेवा अनवः सन् अभियानः त्वमग्ने त्वमसि तस्थिवांसम् । न करीन्द्र त्वदुत्तरो न ज्यायां अस्ति वृत्रहन् ' इत्यादि विष्णुलिङ्गादेव । सर्वोत्तमत्वादिधर्माणामिन्द्रादिष्वसम्भवात् ॥ एवं सति सर्वं विष्णुसूक्तमेव स्यात् । न त्वग्निसूक्तमिदमिदमिन्द्रसूक्तमित्याशङ्कां परिहरति **अभिव्यक्तेरित्यादिना**।

॥ ॐ अभिव्यक्तेरित्याश्मरथायः ॐ ॥ २९ ॥

तत्र तत्र प्रसिद्धावप्यग्न्यादिषु ब्रह्मणोऽभिव्यक्तेरग्न्यादिसूक्तनियम इत्याश्मरथ्यः ॥ २९ ॥

॥ ॐ अनुस्मृतेर्बादरिः ॐ ॥ ३० ॥

तत्र तत्रोक्तस्य विष्णोरग्न्यादिष्वनुस्मामाणत्वात्तन्नियम इति बादरिः॥ ३०॥

ॐ सम्पत्तरिति जैमिनिस्तथा हि दर्शयति ॥ ३१ ॥

साक्षादप्यविरोधं वदन् जैमिनिः सूक्तादिनियममग्न्यादिसम्प्राप्त्या मन्यते।

'तं यथा यथोपासते तदेव भवति' इति दर्शयति ॥ ३१ ॥

न ह्यन्योपासकोऽन्यं प्राप्नुत इति युज्यत इत्यत आह—

॥ॐ आमनन्ति चैनमस्मिन् ॐ ॥ ३२ ॥

एनं विष्णुमग्न्यादावामनन्ति।

'योऽग्नौ तिष्ठन्' 'य एव एतस्मिन्नग्नौ तेजोमयोऽमृतमयः पुरुषः इत्यादिना॥ ३२॥

अग्न्यादिसूक्तेषु मुख्यतो विष्णोः अभिधेयत्वसिद्धावपि अग्न्यादि-सूक्तोपास्याग्न्यादिषु प्रादुर्भूयमानत्वात् अग्न्यादिष्वनुस्मर्यमाणत्वात् अग्न्यादि-सूक्तै रग्न्याधिष्ठितविष्णूपासकस्याग्न्याद्यधिष्ठितविष्णुप्राप्तेरग्न्यादिसूक्त-व्यवस्थेत्यर्थः।

*इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचित श्रीमद्ब्रह्मसूत्रभाष्यटीकायां पद्मनाभतीर्थभट्टाकरविरचितायां सत्तर्कदीपावल्यां प्रथमाध्यायस्य द्वितीयः पादः ।*

*॥ इति वैश्वनराधिकरणम् ॥ ७ ॥*

*॥ इति श्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रभाष्ये श्रीमदानन्दतीर्थभगवत्पदाचार्य विरचिते प्रथमाध्यायस्य द्वितीयः पादः॥ १ ॥ २ ॥*

## तृतीय पादः

हरिः ॐ । श्रीदशप्रमतिभ्यो नमः । विष्णौ तदितरत्रप्रसिद्धानां शब्दानां विष्णौ मुख्यवृत्तिरस्मिन्पादे बाहुल्येन प्रदश्र्यत इत्याह **तत्रेति** ।

**तत्र चान्यत्र च प्रसिद्धनां शब्दानां विष्णौ समन्वयं प्रायेणास्मिपादे दर्शयति।**

यस्मिन् द्यौरित्याद्याम्नायते । तत्र श्रूयमाणो द्युभ्वाश्रयो रुद्रस्तावद्भवेत् । ओतं मनः सहप्राणैश्च सर्वैरिति प्राणाधारत्वेनोच्यमानत्वात् । प्राणानां ग्रन्थिरसि प्राणेश्वर इति च श्रुत्यन्तरेण प्राणाधारत्वस्य रुद्रधर्मत्वेनोक्तत्वात् । ग्रथ्यते तस्मिन्निति ग्रन्थिर्धारकः । स एषोन्तरश्चन्ते बहुधा जायमान इति परामृष्टत्वात् द्युभ्वाद्याश्रयो जीवो वा भवेद्बहुधा जननस्य जीवलिङ्गत्वात् । द्युभ्वाद्याश्रयस्यैव 'अथ परा यथा तदक्षरमाधिगम्यत' इत्युपक्रम्योक्तत्वाद्यदुक्तं परविद्याविषयत्वं विष्णुधर्म इति प्राक् तदपि न सिद्ध्यति । तदाह **विष्णोरित्यादिना** ।

**विष्णोः परविद्याविषयत्वमुक्तम् । तत्र**

**'यस्मिन्द्यौः पृथिवि चान्तरिक्षमोतं मनः सह प्रणैश्च सर्वैस्तमेवैकं जानथ आत्मानम् (मुं. २-२-५)' इत्यत्र ।**

**'प्राणानां ग्रन्थिरसि रुद्रो माऽऽविशान्तकः (महाना. ३५)'**

'प्राणेश्वरः कृत्तिवासाःपिनाकी (घृतसू.)'

इत्यादिना रुद्रस्य प्राणाधारत्वप्रतीतेः।

'स एषोऽन्तरश्चरते बुहुधा जायमानः (मुं. २-२२६)'

इति जीवलिङ्गाच्च तयोः प्राप्तिरित्यत उच्यते।

## ॥ ॐ द्युभ्वाद्यायतनं स्वशब्दात् ॐ ॥

**' तमेवैकं जानवथ आत्मानम् ' इत्यात्मशब्दात् द्युभ्वाद्याश्रयो विष्णुरेव।**

**'आत्मब्रह्मादयः शब्दास्तमृते विष्णुमव्ययम्।**
**न सम्भवन्ति यस्मात्तैर्नैवाप्ता गुणपूर्णता' इति ब्रह्मवैवर्ते॥ १ ॥**

एतन्निराकर्तुं सूत्रं पठित्वा व्याचष्टे द्युभ्वेत्यादिना । 'तमेवैकं जानथ आत्मान' मित्यात्मशब्देन विशेषितत्वात् द्युभ्वाद्याश्रयो विष्णुरेव । गुणैराततत्ववाच्यात्मशब्दो न विष्णोरन्यत्र स्वार्थं लभते । तथाहि उक्तं आत्मब्रह्मेति । अमृतस्यैष सेतुरिति मुक्ताधारत्वेनोच्यमानत्वादपि द्युभ्वाद्याश्रयो विष्णुः । ब्रह्मविदाप्नोति परमित्यादिवचनान्तरैः विष्णुरेव हि मुक्ताश्रयत्वेनोच्यते। तदाह **मुक्तेत्यादिना**।

## ॐ मुक्तोपसृप्यव्यपदेशात् ॐ ॥ २ ॥

**'अमृतस्यैष सेतुः(मुं. २-२-५)'इति। 'ब्रह्मविदाप्नोति परम्(तै. २-१)', 'नारायणं महाज्ञेयं विश्वात्मानं परायणम् (महाना.११)' 'मुक्तानां परमां गतिः ' 'एतमानन्दमयमात्मानमुसङ्क्रामति (तै. २-८)' इत्यादिना तस्यैव मुक्तप्राप्यत्वव्यपदेशात्।**

'बहुनाऽत्र किमुक्तेन यावच्छ्वेतं न गच्छति।
योगी तावन्न मुक्तस्स्यादेष शास्त्रविनिर्णयः'॥

इत्यादित्यपुराणे॥ २॥

पराणां मुक्तानां अयनं श्रुतं श्वेतद्वीपाख्यं विष्णुस्थानमित्यर्थः। यदुक्तं रुद्रो द्युभ्वाद्याश्रय इति तन्निराकुर्वत्सूत्रं पाठित्वा व्याचष्टे **नानुमानमित्यादिना**।

**ॐ नानुमानमतच्छब्दात् ॐ॥ ३॥**

**नानुमानात्मकागमपरिकल्पितरुद्रोऽत्रवाच्यः। भस्मधरोग्रत्वादि-तच्छब्दाभावात्।**

आनुमानमनुमानसम्बन्धीत्यर्थः। यद्वचनं रुद्रप्रापकमुदाहृतं प्राणानां ग्रन्थिरसीति तद्विष्णौ श्रुत्या 'रूजं द्रावयत' इत्यादि पुराणवाक्यैश्च घटयति **सोन्तक इति**।

**'सोऽन्तकः स रुद्रः स प्राणभृत्स प्राणानायकः**

**स ईशो यो हरिर्योऽनन्तो यो विष्णुर्यः परः परोवरीयान्'**

**इत्यादिना प्राणग्रन्थिरुद्रत्वादेर्विष्णोरेवोक्तत्वात्। ब्रह्माण्डे च।**

**'रुजं द्रावयते यस्माद्रुद्रस्तस्माज्जनार्दनः।
इशनादेव चेशानो महादेवो महत्वतः॥**

**पिबन्ति ये नरा नाकं मुक्तास्संसारसागरात्।
तदाधारो यतो विष्णुः पिनाकीति ततः स्मृतः॥**

**शिवः सुखात्मकत्वेन शर्वः शंरोधनाद्धरिः।
कृत्यात्मकमिदं देहं यतो वस्ते प्रवर्तयन्॥**

कृत्तिवासास्ततो देवो विरिञ्चश्च विरेचनात्।
बृंहणाद्ब्रह्माजाऽसावैश्वर्यादिन्द्र उच्यते॥

एवं नानाविधैश्शब्दैरेक एव त्रिविक्रमः।
वेदेषु सपुराणेषु गीयते पुरुषोत्तमः' इति॥

**वामने च—**

आसुरं शं निरुध्यतीति शर्व इत्यर्थः। न च नारायणं महाज्ञेयमित्यादि श्रुतयो रुद्रादिषु घटन्तमिति वाच्यम्। तेषु नारायणादिशब्दासम्भवात्। तदाह **नत्विति**।

'नतु नारायणादीनां नाम्नामन्यत्र सम्भवः।
अन्यनाम्नां गतिर्विष्णुरेक एव प्रकीर्तितः' इति॥

**स्कान्दे च—**

एतदेव विवृणोति **ऋत** इति।

'ऋते नारायणादीनि नामानि पुरुषोत्तमः।
प्रादादन्यत्र भगवान् राजेवर्ते स्वकं पुरम्' इति॥

'चतुर्मुखश्शतानन्दो ब्रह्मणः पद्मभूरिति।
उग्रो भस्मधरो नग्नः कपालीति शिवस्य च॥

विशेषनामानि ददौ स्वकीयान्यपि केशवः'

इति च ब्राह्मे॥ ३॥

॥ ॐ प्राणभृच्च ॐ॥ ४॥

एतैरेव हेतुभिर्न जीवो वायुश्च।

यदुक्तं जीवो द्युभ्वाद्याश्रय इति तं निराकुर्वत्सूत्रं पठित्वा व्याचष्टे प्राणेत्यादिना। उक्तहेतुभिर्यथा द्युभ्वाश्रयो वायुर्न भवति। तथा सुतरां जीवोपि। यत्तपत्पापकं वचनमुक्तं ऽस एषोन्तरश्चत' इति तद्विष्णोः श्रुत्या । घटयति **अजायमान इति।**

**'अजायमानो बहुधा विजायते (तै.आ ३-१३-१)' इति तस्यैव बहुधा जन्मोक्तेः ॥ ४॥**

जुष्टं यदा पश्यत्यन्यमीशमिति । जीवात् द्युभ्वाद्याश्रयस्यात्मनो भेदव्यपदेशादपि नासौ जीव इत्याह **भेदेति।**

**॥ ॐ भेदव्यपदेशात् ॐ ॥ ५ ॥**

**न चैक्यं वाच्यम्।**

**'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानम् ( मुं. ३-१-२)'**

**इति भेदव्यपदेशात्॥ ५॥**

अनेन यत्पराभिमतं जीवेशैक्यं तदपि निरस्तं भवति। ' द्वे विद्येवेदितव्ये परा चैवापरा च '। 'अथ परा यया तदक्षरमधिगम्यत ' इति परविद्याविषयस्य विष्णोः प्रक्रान्तत्वात् । तद्बाधाभावात्स एवात्र द्युभ्वाद्याश्रयतेवेनोच्यते नान्य इत्याह **प्रकरणादिति।**

**ॐ प्रकरणात् ॐ**

**द्वेविद्ये वेदितव्ये इति तस्य ह्येतत् प्रकरणम्॥ ६॥**

द्वा सुपर्णेत्यनेन पापकर्तुजीवात्कर्मफलमनश्नतो दीप्यमानस्य द्युभ्वाद्याश्रयस्य भेदव्यपदेशादपि नासौ जीव इत्याह **स्थितीति।**

अतो द्युभ्वाद्याश्रयो विष्णुरिति सिद्धम्।

## ॐ स्थित्यदनाभ्यां च ॐ ॥ ७ ॥

'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।
तयोरन्यः पिप्पलंस्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति

(मु.३-१-१)' इति ईशजीवयोः स्थित्यदनोक्तेः॥ ७॥

*॥ इति द्युभ्वाद्यधिकरणम् ॥ १ ॥*

योवै भूमा तत्सुखमिति श्रूयमाणोपि भूमा (पुनर्भूत्वा) विष्णुरित्येतदाक्षिप्य समाधीयते **प्राणो वेत्यादिना।**

**'प्राणो वा आशाया भूयान्' इत्युक्त्वा 'यो वै भूमा तत्सुखं**

**(छां.७-२३)' इत्युक्तेस्तस्यैव भूमत्वप्राप्तिः।**

**'उत्क्रान्तप्राणान् (छां.७-१५-३)' इत्यादि तल्लिङ्गात्प्राणशब्दश्च वायुवाचीत्यतो वक्ति-**

## ॥ ॐ भूमा सम्प्रसादादध्युपदेशात् ॐ ॥ ८ ॥

**'सम्प्रसादात्पूर्णसुखरूपत्वात् अध्युपदेशात् सर्वेषामुपर्युपदेशाच्च विष्णुरेव भूमा।**

**'सहस्रशीर्षं देवं विश्वाक्षं विश्वशम्भुवम्।**
**विश्वं नारायणं देवमक्षरं परमं पदम्॥**

**विश्वतः परमां नित्यम्' इति हि श्रुतिः तमुत्क्रान्तं प्राणो अनूत्क्रामति इत्यादिना उत्क्रामणादिलिङ्गविरोधोऽपि॥ ८॥**

प्राणो वा आशाया भूयानिति सन्निहितवाक्यबलात् प्राणशब्देनोक्तो वायुरेव भूमा इति चेन्मैवम् । प्राणशब्दस्य विष्णावप्युपपन्नत्वेन अत्र वायुप्रापकशब्दाभावात् । नन्वस्य प्राणस्योत्क्रमणं श्रूयते 'अथ

यद्यप्येनमुत्क्रान्तप्राणान् शूलेन समासं व्यतिषं दहेत्। न चैनं ब्रूयुः पितृहासीति न मातृहासी'ति । उत्क्रमणं मुख्यप्राणस्यैव लिङ्गामिति चेत् । मैवम् । विष्णोरप्युत्क्रमणसंश्रवणात् । 'तमुत्क्रामन्तं प्राणा, नूत्क्रामती'ति श्रुत्यन्तरे । अतो ' वाग्वाव नाम्नो भूयसी मनो वाव वाचो भूय ' इत्यारभ्य सर्वेषामुपर्युपदेशात् ' तत्सुखं नाल्पे सुखमस्ती'ति पूर्णसुखत्वोपदेशाच्च विष्णुरेव भूमा । पूर्णसुखाश्रयत्वं सर्वोत्तमत्वं चान्यत्र विष्णोरेव श्रूयते । ' सहस्रशीर्ष देव'मिति । विश्वशं भुवं । पूर्णसुखास्पदं परमश्वासावेश्चति परमां इत्यर्थः । यो वै भूमा तदमृतं स एवाधस्तात्सोपरिष्टा'दित्यादिना सर्वगतवादिधर्मवत्वेन व्यपदेशाच्च भूमा विष्णुः न मुख्यप्राणः । अत्र प्राण शब्दस्य मुख्यतया मुख्यप्राणपरत्वमङ्गीक्रियते । इयदामननादित्यादौ उत्तरत्र प्रतिपादयिष्यमाणत्वादित्यर्थ इत्यनवद्यम् ।

## ॥ ॐ धर्मोपपत्तेश्च ॐ ॥ ९ ॥

**सर्वगतत्वादिधर्मोपपत्तेश्च ॥ ९ ॥**

*इति भूमाधिकरणम् ॥ २ ।*

**अदृश्यत्वादिगुणा विष्णोरुक्ताः ।**

**'अदृष्टं द्रष्टृश्रुतं श्रोतृ (बृ.५-८-११)' इत्यादिना ।**

**'अहं सोममाहनसं बिभर्मि (ऋ.५-८-११)' इत्यादेस्यास्थापि सम्भवान्मध्यमाक्षरस्योक्ता इत्यतो ब्रूते ॥**

तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृ अश्रुतं श्रोतृ अमतं मन्तृ इत्यादि श्रूयते । अत्र परमेश्वरधर्मादृष्टत्वादिगुणत्वेनोच्यमानमक्षरं लक्ष्मीतत्वं भवेत् । ' एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत ' इत्यादिना चन्द्राद्याधारत्वेन विष्णोरुक्तत्वाच्चन्द्राद्याधारत्वस्य गुणत्वेन लक्ष्म्या उक्तत्वादहं सोममाहनसं बिभर्म्यहं त्वष्टारमुत पूषणं भगमिति । अत्राहनसशब्देन

आसमन्ताद्धन्तृत्वाद्रुद्र उच्यते । सोमशब्दस्तु उमयासहितः सोम इति रुद्रविशेषणमपि भवति । अक्षरमदृष्टं द्रष्ट्रित्यादिना यदक्षरं तदन्यैरदृष्टत्वादिकं चोच्यते । तल्लक्ष्मीतत्वस्यापि सम्भवतीत्येवं पूर्वपक्षयति । अदृश्यत्वेत्यादिना सिद्धान्तयति अक्षरमित्यादिना ।

**ॐ अक्षरम्बरान्तधृतेः ॐ ।। १० ।।**

**'एतस्मिन् खल्वक्षरेगार्ग्याकाश ओतश्च प्रोतश्च (बृ. ५-८-११)'**

**इत्यम्बरान्तस्य सर्वस्य धृतेर्ब्रह्मैवाक्षरम् ।**

**'य उत्रिधातु पृथिवीमुत द्यामेको दाधार भुवनानि विश्वा**

**(ऋ.१-१५४-४)' ।**

**'भर्ता सन्भ्रियमाणो विभर्ति एको देवो बहुधा निविष्टः ।**

**यदा भारं तन्भ्रयते स भर्तुम् परास्य भारं पुनरस्तमेति**

**(तै.आ ३-१४)' ।**

**'यस्मिन्निदं सं च विचैधि सर्वं यस्मिन्देवा अधि विश्वे निषेदुः (महाना. १-२)' इत्यादिश्रुतेः ।**

**'पृथिव्यादिप्रकृत्यन्तं भूतं भवव्यं भवच्च यत् ।**
**विष्णुरेकोबिभर्तीदं नान्यस्तस्मात्क्षमो धृतौ '**

**इति स्कन्दे ।। १०।।**

**।। ॐ सा च प्रशासनात् ॐ ।। ११ ।।**

**साच धृतिः प्रशासनादुच्यते । 'एतस्य वा अक्षरस्य प्रशासनं गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' इत्यादिना ।**

**तच्च प्रशासनं विष्णुरेव।**

**'सप्तार्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशा वि धर्मणि**

**(ऋ.१-१६४-३६)'।**

**'चतुर्भिः साकं नवतिं च नामभिश्चक्रं न वृत्तं व्यती रवीवित्' इत्यादिश्रुतेः।**

**'एकः शास्ता न द्वितीयोऽस्ति शास्ता'।**

**'यो हृच्छयस्तमहमिह ब्रवीमि'।**

**'न केवलं मे भवतश्च राजन्स वै बलं बलिनां चापरेषाम्'**

**इत्यादेश्च॥ ११॥**

अत्राक्षरशब्देन विष्णुरुच्यते न लक्ष्मीः । 'यद्भूतंच-भवच्चभविष्यच्चेत्याचक्षते । आकाश एव तदोतंच प्रोतं च एतस्मिन् खल्वेक्षरे गार्ग्याकाश ओतश्च प्रोतश्चे'ति सर्वाधारतयोक्ताकाशशब्दगृहीत-लक्ष्म्याधाराक्षराज्ञानिमित्त जगद्धारणनिमित्तश्रवणादप्यत्राक्षरशब्देन विष्णु-रुच्यते । त्रिष्वाज्ञया जगद्धारणस्य सप्तेत्यादिवचनसिद्धत्वात् । सप्तमहदहङ्कारपञ्चभूताख्याः पदार्थाः आसमन्तादृऋद्धो गर्भो ब्रह्मा-ण्डाख्यो येषां ते ऋद्धगर्भाः वननीयो भजनीयश्चेति भुवनस्य विष्णोः रेतस्थानीयाःते तस्य प्रदिशा आदेशेन आज्ञया विधर्मणि विधारणे तिष्ठन्ति आज्ञयैव धृता इत्यर्थः । 'अस्थूलमनण्वह्रस्यस्वमदीर्घ-श्लोहितमस्नेहमच्छायमतमोऽवाय्वनाकाश'मित्यादिनाप्रकृतेर्विलक्षमाणत्वेनोच्य-मानत्वात् अत्राक्षरं विष्णुर्न प्रकृतिः। 'अस्थूलोनणुरूप' इत्यादिवचनानन्तरेण विष्णोरेवास्थूलत्वादिलक्षणत्वेनोक्त-चादित्याह **अन्यभावेत्यादिना।**

॥ॐ अन्यभावव्यावृत्तेश्च ॐ ॥ १२ ॥

'अस्थूलमनणु (बृ.५-८-८)' इत्यादिना स्थूलाण्वादीनां अन्यवस्तुस्वभावानां व्यावृत्तेश्च।

'अस्थूलोऽनणुरमध्यमो मध्यमोऽव्यापको व्यापको
योऽसौहरिरादिरनादिरविश्वो विश्वः सगुणौ निर्गुणः'

इत्यादेर्विष्णोरेव ते धर्मः।

'अस्थूलोऽनणुरूपोऽसावाविश्वो विश्व एव च।
विरुद्धधर्मरूपोऽसावैश्वर्यात्पुरुषोत्तमः' ॥

इति च ब्रह्मे ॥ १२ ॥

*॥ अक्षराधिकरणम्॥ ३ ॥*

'सदेव सौम्येदमग्र आसीत्(छां.६-२)इत्यादिना सतः स्रष्ठुत्वं मुच्यते तच्च सत् बहुस्यां प्रजायेय' इति परिणामप्रतीतेर्न विष्णुः। स हि

'अविकारस्सदा शुद्धो नित्य आत्मा सदा हरिः'

इत्यादिनाऽविकारः प्रसिद्ध इत्यतो ब्रवीति॥

॥ ॐ ईक्षतिकर्मव्यपदेशात्सः ॐ ॥ १३ ॥

'तदैक्षत' इतीक्षतिकर्मव्यपदेशात्। स एव विष्णुरत्रोच्यते।

'नान्योऽतो द्रष्टा (बृ.५-७-२३)। 'नान्यदतोऽस्ति द्रष्ट (बृ.५-८-११)'

इत्यादिना तस्यैव हि तल्लक्षणम्।

बहुत्वं चाविकारेणैववोक्तं।

'जायमानो बहुधा विजायते (तै.आ ३-१३-१)' इति॥ १३॥

*॥ इति सदधिकरणाम् ॥ ४ ॥*

चन्द्रादित्याद्याधारत्वं विष्णोरुक्तम्। तच्च 'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशः किं तदत्र विद्यते (छां.८-१-२)'।

'उभे अस्मिन्द्यावापृथिवी अन्तरेव समाहिते।

उभावाग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ।

विद्युन्नक्षत्राणि (छां.८-१-३)' इत्यादिनाकाशस्य प्रतीयते।

चाकाशो न विष्णुः।

'तस्यान्ते सुषिरँ सूक्ष्मं तस्मिन् सर्वं प्रतिष्ठितम् (महाना. ११)'

इति श्रुतेरित्यत आह—

## ॥ ॐ दहर उत्तरेभ्यः ॐ ॥ १४ ॥

'य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोविजिघत्सोऽपिपासः सत्यकामस्सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः (छां.१-६-७)

इत्यादिभ्य उत्तरेभ्योगुणेभ्यो दहरे विष्णुरेव

न विद्यते अन्यो व्यापको यस्यासावव्यापक इत्यर्थः।

सदेवसोन्येत्यादेरयमर्थः । 'सदेवसोम्येदमग्र आसीदेकनमेवाद्वितीयं तदैक्षत बहुस्यां प्रजायेयेति तत्तेजो सृजते'त्यादिश्रुत्या तत् जगत्सृष्ट्या श्रूयते तत्प्रधानं भवेत् । बहुधा जायमानत्वेनोच्यमानत्वात् बहुधा परिमाणमस्तु

जडरूपप्रधानधर्मो न विष्णुधर्मः । 'अविकारशुद्ध'इत्यादिवचनैः विष्णोरविकारत्वेनोक्तत्वादिति चेन्मैवम् । विष्णुरेवात्र सच्छब्देनोच्यते न प्रधानं ईक्षितृत्वेनोच्यमानत्वात् ईक्षतृत्वं मुख्यं न विष्णवन्यस्य सम्भवति 'नान्योतोस्तिद्रष्टे'त्यादिश्रुतिविरोधात् । अजायमानो बहुधा विजायत इति अपरिणामस्यैव बह्ववतारश्रवणात् विष्णोर्नबहुभावनश्रुतिर्विरुध्यते ।

चन्द्रेत्यादेरयमर्थः । अथ 'यदिदमस्मिन् ब्रह्मपुर' इत्याम्नायते तत्राकाशस्य चन्द्राद्याधारत्वमुच्यते । स चाकाशशब्दाभिधेयो भूताकाशो न विष्णुः । 'हृदयं तद्विजानीयात्', 'तस्यान्ते सुषिरं सूक्ष्मं तस्मिन् सर्वं प्रतिष्ठितम्' इति श्रुत्यन्तरसंवादात् । अतश्च यदुक्तं चन्द्राद्याधारत्वं एतस्य वा अक्षरस्येत्यादिना विष्णोरेवेति तन्न सिध्यतीत्येवं प्राप्तेऽभिधीयते । चन्द्राद्याधारो विष्णुरेवात्र निर्दिश्यते नाकाशम् । 'य आत्मापहतपाप्माविजरोविमृत्युर्विशोकोविजिघित्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः' इत्युत्तरवाक्यविरोधात् । 'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुंडरीकं वेश्म दहरोस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वावविजिज्ञासितव्य' मित्यन्वेष्टव्यतया यो निर्दिष्टो विष्णुः दहराकाशस्थः तद्धृदयाकाशसन्निहितं सर्वमुच्यते । 'यावान्वाऽयमाकाशस्तावनेषोऽन्तर्हृदयाकाश उभे अस्मिन् द्यावा पृथिवी'त्यादिना । अथवा विष्णुमेव न बाह्यमाकाशं व्यापकं हृत्कुहरस्थाकाशशब्देन निर्दिश्यतत्स्थं सर्वमुच्यते । उभे इत्यादिना अपहतपाप्मत्वादिगुणकश्च विष्णुरेवेतच्छृत्यन्तरसंवादेन दृढीकरोति **योशनायेत्यादिना** ।

**'योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति'**

**'स एक सर्वेभ्यः पाप्मभ्य उदितः'**

**इत्यादिना विष्णोरेव हि ते गुणाः ।**

**'नित्यतीर्णाशनायादिरेक एव हरिः स्वतः ।**

अशनायादिकानन्ये तत्प्रसादात्तरन्ति हि' इति पाद्मे । सापेक्षनिरपेक्षयोश्च निरपेक्षं स्वीकर्तव्यम्।

'सत्यकामोऽपरो नास्ति तमृते विष्णुमव्ययम्।
सत्यकामत्वमन्येषां भवेत्तत्काम्यकमिता ॥ १४ ॥

इति च स्कान्दे ॥ १४ ॥

## ॥ ॐ गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च ॐ ॥ १५ ॥

'अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति (छां.८-३-२)'

इति सुप्तस्य तद्गतिर्ब्रह्मशब्दश्चोच्यते।

'सता सोम्य तदा सम्पन्नो भवति (छां.८-३-२)' इति श्रुते हि सुप्तो गच्छति।

'अरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके (छां.८-५-३)' इति लिङ्गं च तथा हि दृष्टम्।

'अरश्च ह वै ण्यश्चार्णवौ सुधा समुद्रौ तत्रैव सर्वाभिमतप्रदौ द्वौ'

इत्यादिना तस्यैव हि तल्लक्षणत्वेनोच्यते॥ १५ ॥

## ॥ ॐ धृतश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॐ ॥ १६ ॥

'एष सेतुर्विधृतिः (छां.८-४-१)' इति धृतेः। 'एष भूताधिपतिरेष भूतपालः (बृ.६-४-२१)' इत्याद्यस्य महिम्नोऽस्मिन्नुपलब्धेः।

अशनाया विजिघित्साक्षुदित्यर्थः । नन्वशनायादिपिपासाद्यतिक्रमणं न विष्णोरेव मुक्तानामपि सम्भवादित्याशङ्कित आह नित्येति । न च दहराकाशस्याप्यपहतपाप्मत्वादिकं किञ्चिदाशङ्कनीयं अप्रसक्तप्रतिषेध-

प्रसङ्गात् । भगवदनुकूलेच्छावत्वमेवं मुक्तानां सत्यकामत्वमित्यर्थः । गतीत्यादेरयमर्थः । द्यावापृथिव्याधारं प्रकृत्य 'इमाः सर्वाः प्रजाः अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दती'ति श्रूयमाणत्वादप्यसौ विष्णुरेव नहि दहर आकाशः । विष्णुरेव हि सुप्तगम्यः प्रसिद्धो 'यत्र तत्पुरुषः स्वपिति नाम सतासोन्य तदा सम्पन्नो भवती'त्यादि श्रुतौ ब्रह्मलोकशब्दोऽत्र दहराकाशविषयत्वे अरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके इति लिङ्गदर्शनं विरुध्यते । अरण्यशब्दाभिधेयसुधासमुद्रयोर्विष्णुलोकस्थत्वेन प्रसिद्धत्वादागमेषु । तथा हि उक्तम् । पुरुषोत्तमतन्त्रे 'अरश्च वेण्यश्च सुधासमुद्रौ तत्रैव सर्वाभिमतप्रदौ द्वा'विति । धृतेरित्यादेरयमर्थः । द्यावापृथिव्याधारं प्रकृत्य 'स सेतुर्विश्रुतिरेषां लोकाना'मिति श्रूयमाणत्वादप्यसौ विष्णुरेव न दहराकाशः । त---- पुरुष एव हि जगद्धारणादिमहिमाश्रुत्यन्तरोपलब्धः । 'स एषोऽन्तर्हृदयआकाश-स्तस्मिंश्छेते । एष भूताधिपतिरेष भूतपालः एष सेतुर्विधरणा एष लोकानामसम्भेदायेति' विष्णोरेवायं महिमेत्येतच्छृत्यन्तरैः साधयति । **एतस्मिन्नित्यादिना।**

**'एतस्मिन् खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च (बृ.५-८-११)'**

**'एतस्य वा अक्षरस्य प्रशासने गार्गि (बृ.५-८-९)'**

**'स हि सर्वाधिपतिः स हि सर्वपालः स ईशः स विष्णुः'**

**'पतिं विश्वस्याऽत्मेश्वरम् (महाना.११)'**

**इत्यादि श्रुतिभ्यस्तस्य ह्येष महिमा।**

**'सर्वेशो विष्णुरेवैको नान्योऽस्ति जगतः पतिः' इति स्कन्दे ॥ १६ ॥**

'तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्य'मिति दहराकाश-स्थितस्योपास्यत्वेन श्रवणादत्र विष्णुरेव प्रतिपाद्यते । तथाहि श्रुत्यन्तरम् । 'दहरं

विपाप्मं परवेश्मभूतं यत्पुण्डरीकं पुरमध्यसंस्थम् । तत्रापि दह्नं गगनं विशोकः तस्मिन्यदन्तःसदुपासितव्यम् । सहस्रशीर्षं देव'मिति । तदाह **प्रसिद्धेरित्यादिना।**

## ॥ ॐ प्रसिद्धेश्च ॐ ॥ १७॥

**'तत्रापि दहरं गगनं विशोकस्तस्मिन् यदन्तस्तपादुपासितव्यम् (महाना. १०-७)' इति प्रसिद्धेश्च।**

यदुक्तं तस्यान्ते सुषिरमिति तत्राह **तदन्तरिति।**

**तदन्तस्थत्वापेक्षत्वान्न सुषिरश्रुतिविरोधः॥ १७॥**

## ॐ इतरपरामर्शात्स इति चेन्नासम्भवात् ॐ ॥ १८॥

**'परं ज्योतिरुपसम्पद्य स्वेनरूपेणाभिनिष्पद्यते (छां.८-१२-३)'**

**'एष आत्मेति होवाच (४-१५-१)' इति जीवपरामर्शात्स इति चेन्न। तस्य स्वतोऽपहतपाप्मत्वद्यसम्भवात्॥ १८॥**

## ॐ उत्तराच्चेदाविर्भूतस्वरूपस्तु ॐ ॥ १९॥

**'स तत्र पर्येति जक्षन् क्रीडन् रममाणः (छां.८-१२-३)' इत्याद्युत्तरचनाज्जीव एवेति चेन्न । तत्र हि परमेश्वरप्रसादात् आविर्भूतस्वरूपो मुक्तः उच्यते । यत्प्रसादात्स मुक्तो भवति स भगवान्पूर्वोक्तः॥ १९॥**

## ॐ अन्यार्थश्च परामर्शः ॐ ॥ २०॥

**यं प्रप्यस्वेन रूपेण जीवऽभिनिष्पद्यते स एष आत्मेति परमात्मार्थश्च परामर्शः॥ २०॥**

ॐ अल्पश्रुतेरिति चेत्तदुक्तम् ॐ ॥ २१ ॥

'दहरः (छां.८-१-१)' इत्यल्पश्रुतेर्नेति चेन्न।

'निचाय्यत्वादेवं व्योमवच्च' इत्युक्तत्वात्।

'एष म आत्माऽन्तर्हृदये ज्यायान् (छां.३-१४-३)' इति श्रुत्युक्तत्वाच्च॥ २१ ॥

*॥ इति दहराधिकरणम् ॥ ५ ॥*

अदृश्यत्वादयः परमेश्वरगुणा उक्ताः।

" तेषा सुखं शाश्वतं नेतरेषाम्।

तदेतदितिमन्यन्तेऽनिर्देश्यं परमं सुखम्'

इत्यादिना ज्ञानिसुखस्याप्यनिर्देश्यत्वमज्ञेयत्वं चोच्यत इत्यतो वक्ति—

ॐ अनुकृतेस्तस्य च ॐ ॥ २२ ॥

' तमेव भ्रान्तमनुभाति सर्वम् इत्यनुकृतेः,

' तस्य भासा सर्वमिदं विभाति ( कठ. ५-१५)'

इति वचनाच्च परमात्मैवानिर्देश्यसुखरूपः।

न हि ज्ञानिसुखमनुभाति सर्वम्। न च तद्भासा।

'अहं तत्तजो रश्मीत्' इति नारायणभासा हि सर्वं भाति॥ २२ ॥

ॐ अपि स्मर्यते ॐ ॥ २३ ॥

'यदादित्यगतं तेजो जगद्भासयतेऽखिलम्।

यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्

(भ.गी १५-१२)'इति।

'न तद्भासयते सूर्यो न शशाङ्को न पावकः।
यद्गत्वा न निवर्तन्त तद्धाम परमं मम (भ.गी १५-६)'

इति च।। २३ ।।

*॥ अनुकृत्यधिकरणम् ॥ ६ ॥*

विष्णुरेव जिज्ञास्य इत्युक्तम्। तत्र

'ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति।
मध्ये वामनमासीनं विश्वेदेवा उपासते ( कठ. ५-३)'

इति सर्वदेवोपास्यः कश्चित्प्रतीयते। स च

'एवमेवैष प्राण इतरान् प्राणान् पृथक्पृथगेव सन्निधत्ते (प्रश्न. ३-४)'

'योऽयं मध्यमः प्राणः (बृ. ३-५-११)' 'कुविदङ्ग (ऋ. ७-९१-१)'

इत्यादिना प्राणव्यवस्थापकत्वान्मध्यमत्वात् सर्वदेवोपास्यत्वाच्च वायुरेवेति प्रतीयते। अतोऽब्रवीत्

यथा भाण्डान्तस्थमपिगृहस्थमित्युच्यते एवं सुषिरस्थितविष्णवावेव सर्वं प्रतिहितमिति ज्ञातव्यम् । सुषिरस्य सर्वाधारत्वविरोधादित्यर्थः । इतरेत्यादेरयमर्थः । 'एष आत्मापहतपाप्मे'त्यादिवाक्यवशाद्दहराकाशस्थितो विष्णुरेव द्यावापृथिव्याधार इत्युक्तम् तन्न। दहराकाशस्थितस्य जीवस्यैव 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते एष आत्मेति होवाचे'ति परामर्शादिति चेन्मैवम् । जीवस्यापहतपाप्मत्वादिधर्मासम्भवेनात्रात्मशब्देन निर्देशासम्भवात्। 'परं ज्योतिरूपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स तत्र पर्येति जक्षन् कीडन् रममाण' इत्युपन्तिनवाक्येन मुक्तजीवप्रतीतेः । मुक्तस्यापहत-

पाप्मत्वादिगुण-कात्मत्वसम्भव इति चेन्मैवम्। अमुख्यार्थत्वात्। न हि मुख्ये सत्यमुख्यं युज्यते । अतः परमेश्वरप्रसादलब्धापहतपाप्मत्वादि गुणममुख्यात्मानं जीवं परित्यज्य मुख्यः परमेश्वर एवापहतपाप्मत्वादिना पूर्वमुक्तः । न चैष य आत्मेति जीवपरामर्शविरोधः, यं परं ज्योतिश्शब्दाभिधेयमुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते । एष आत्मेति परमात्मन एव परामर्शोपपत्तेः।

अदृश्यत्वादेरयमर्थः । 'तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखम्', 'कथं नु तद्विजानीया'मितिश्रुतौ ज्ञानिसुखस्यानिर्देश्यत्वादिकमुच्यते । अतः परमात्मैवादृश्यत्वादिगुणक इति यदुक्तं प्राक् तन्न सिध्यतीति चेन्मैवम्। 'तस्य भासा सर्वमिदं विभाती'ति वाक्यशेषात् 'अहं तत्तेजीरश्मीन्नारायण'मिति श्रुत्यन्तरविरोधात् । यदादित्यगतं तेज इत्यादि वाक्यविरोधात्तत्तेजो विद्धिमामकमिति मत्तेजसा प्रवर्तितमित्यर्थः ।

## ॥ ॐ शब्दादेव प्रमितः ॐ ॥ २४ ॥

**वामन शब्दादेव विष्णुरिति प्रमितः। न हि श्रुतेर्लिङ्गं बलवत्।**

विष्णुरेव जिज्ञास्य इत्यादेरयमर्थः। ऊर्ध्वं प्राणमुन्नयतीत्याद्याम्नायते। तत्र तावल्लिङ्गान्मुख्यप्राणः पतीयते । यदत्र प्राणापानादिविनियोजकत्वं यन्मध्यस्थितत्वं यच्च सर्वदेवोपास्यत्वं तत्सर्वमेष प्राण इत्यादि श्रुत्यन्रेषु मुख्यप्राणशब्दाभिधेयस्य प्रधानवायोर्लिङ्गत्वेन उच्यते। कुविदङ्गेत्यस्यायमर्थः अङ्गेति संबोधनम्। नमस्कारादिरूपया भक्त्या प्रवृद्धा अनवद्याः पुरा ये देवाः सूर्येण सहासन् ते ज्ञानिने क्लेशबाधितैः शरणत्वेन प्राप्ताय वायवे क्वचिदेकान्ते उषसः प्रकाशरूपाः बुद्धिं ध्यानाख्यां आवसन् स्थापयामासुरकुर्वन्निति। अतो यदुक्तं प्राग्विष्णुरेव निदिध्यासितव्य इति तन्न सिध्यतीति चेन्मैवम्। विष्णुरेवात्र

प्रतिपाद्यते । वामनमासीनमिति वामनश्रुतेः । यदुक्तं मुख्यप्राणलिङ्गं तच्छ्रुत्या बाध्यते दुर्बलत्वात् । तदुक्तं जैमिनिना 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये परदौर्बल्यमथविप्रकर्षात्' इति । यत्र श्रुतिलिङ्गादयः परस्परं विरुध्यन्ते तत्र पूर्वपूर्वबलीयस्त्वं पुराणवचनेन साधयति । **श्रुतिरिति** ।

**'श्रुतिर्लिङ्गं समाख्या च वाक्यं प्रकरणं तथा ।**
**पूर्वं पूर्वं बलीयः स्यादेवमागमनिर्णयः' इति स्कन्दे ।।**

अत्र समाख्या नाम समानप्रकरणमुच्यते । विष्णावप्युपपन्नत्वेनान्यथा सिद्धत्वादप्यत्र मुख्यप्राणलिङ्गं न विरोधीत्याह **तच्चेति** ।

**तच्च लिङ्गं विष्णोरेव । तस्यैव प्राणत्वोक्तेः**

**'तद्वै त्वं प्राणो अभवः' इति ।। २४ ।।**

यदत्राङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठतीत्यङ्गुष्ठमात्रत्वश्रवणं सर्वव्यापकस्य वामनस्य तद्घटयति **हृदीत्यादिना** ।

## ।। ॐ हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॐ ।। २५ ।।

**सर्वगतस्यापि तस्याङ्गुष्ठमात्रत्वं**
**हृद्यवकाशापेक्षया युज्यते ।**
**इतरप्राणिनामङ्गुष्ठाभावेऽपि**
**मनुष्याधिकारत्वान्न विरोधः ।। २५ ।।**

*।। इति वामनाधिकरणम् ।। ७ ।।*

**मनुष्यणामेव वेदविद्यायामधिकार इत्युक्तम् ।**

**तिर्यगाद्यपेक्षयैव मनुष्यत्वविशेषणमुक्तं, न तु देवाद्यपेक्षयेत्याह ।**

**॥ ॐ तदुपर्यपि बादरायणः सम्भवात् ॐ ॥ २६ ॥**

तदुपरि मनुष्याणां सतां देवादित्वप्राप्त्युपरि । सम्भवति हि तेषां खिशिष्टबुद्ध्यादिभावात् । तिर्यगादीनां तदभावादभावः । तेषामपि यत्र विशिष्टबुद्ध्यदिभावास्तत्राविरोधः । निषेधाभावात् । दृश्यन्ते हि जन्तितार्यादयः ॥ २६ ॥

**ॐ विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॐ ॥ २७ ॥**

मानुष्या एव देवादयो भवन्तीति तदुपपत्तिरीत्युक्तम् । तत्र यदि मनुष्याः सन्तो देवादयो भवन्ति तत्पूर्वं देवताभावाद्देवतोद्दिष्टकर्मणि विरोध इति चेन्न । अनेकेषां देवतापदप्राप्तेर्दर्शनात् ।

'तेह ना कं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः'

इति ॥ २७ ॥

हृदयाकाशेऽगुष्ठपरिमाणत्वेन मनुष्याणां वामनोपास्तिं विधातुमङ्गुष्ठ-परिमाणत्वं वामनस्योक्तमित्यर्थः ।

अत्र मनुष्याधिकारत्वादित्युक्तेप्यर्थित्वसामर्थ्यादिमत्वेन देवादीनां वेदोक्तब्रह्मोपासनाधिकारसम्भवान्मध्ये वामनमासीनमित्यादिश्रुत्युक्तत्वाच्च नात्राधिकारस्तेषां वार्यः । इदानीन्तनदेवानामुत्पत्तिमत्वादुत्पत्तेः प्रागात्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इत्यादिशास्त्रं कथं तानधिकरोति कथं च तदुद्देशेन हविर्दानं तदानीमिति नाशङ्कनीयम् । यत्र पूर्वे साध्याः सन्ति देवा इति पूर्वमपि देवतान्तरसद्भावश्रुतिविरोधात् । तदाह मनुष्याणां सतां देवादित्वप्राप्त्युपरीत्यस्य देवादिपदयोग्यानां मनुष्यादीनां तत्तत्साधनानुष्ठानेन देवादिपदप्राप्तेः उपर्यपि वेदोक्तब्रह्मोपासनाधिका-रोस्तीत्यर्थः । तिर्यगादीनामित्यत्रादिशब्देन स्थावरग्रहणम् । दृश्यन्ते हि जातिस्मरणयोगात्सूक्तद्रष्टृत्वेन भारतादिषु जरितार्यादयः पक्षिणः । अतो

मनुष्येभ्योऽन्योपि वेदोक्तब्रह्मोपासनाधिकारिदेवताङ्गीकारो न घटते । वेदानां नित्यत्वाद्देवानां विनाशित्वात् वेदानां नित्यत्वं च वाचाविरूपनित्यये-त्यादिश्रुत्या । तत्कर्तुरसिद्ध्या च सिद्धम् । कृतकृत्वे प्रामाण्यं न स्यात् । वेदकर्तुराप्तत्वानिश्चयात् । विप्रलम्भादिसम्भवात् । स्मृतिपुराणादीनां पौरुषेयाणां श्रुतिमूलत्वेन प्रामाण्यस्य वेदनित्यत्वमन्तरेणासिद्धेः तद्वन्नित्यानां वैदिकेन्द्रादिशब्दानां इदानीन्तनेन्द्रादिनाशानन्तरं वाच्याभावेन विरोधापत्तिरिति वाच्यम् । घटादिशब्दवाच्यघटादिनाशेऽपि घटाद्यन्तरसृष्टिवत् सूर्यादि-शब्दवाच्यसूर्यादिनाशेऽपि सूर्याद्यन्तरसृष्टिश्रुतेः । सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयदिति । तदाह शब्देत्यादिना ।

## ॐ शब्द इति चेन्नातः प्रभवात् प्रत्यक्षा-नुमानाभ्याम् ॐ ॥ २८ ॥

**'वाचा विरूप नित्यया (ऋ. ८-६४-६)' इत्यादि श्रुतेराप्त्य-निश्चयान्नित्यत्वापेक्षत्वाच्च मूलप्रमाणस्य स्वतः प्रामाण्यप्रसिद्धेश्च नित्यत्वाद्वेदस्य तदुदितानां देवानामनित्यत्वात् पुनरन्यभावनियमा-भावाच्च शब्दे विरोध इति चेन्न ।**

**'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् (महाना. ५-७)'**

**'यथैव नियमः काले सुरादिनियमस्तथा ।**

**तस्मान्नानीदृशं क्वापि विश्वमेतद्भविष्यति' ॥**

**इत्यादेरत एव शब्दात्तेषां प्रभवनियमात्, महतां प्रत्यक्षात् । यथेदानीं तथोपर्यपि देवा भविष्यन्तीतीतरेषामनुमानाच्च ॥ २८ ॥**

यथर्तृष्वृतुलिङ्गानि नानारूपाणि पर्यये । दृश्यन्ते तानि तान्येव तथा तावद्युगादिष्वेत्यनेन वचनेन यथैव कालनियमः इत्यस्यार्थो ज्ञातव्यः । तथा च

उक्तम् । स हि विश्वसृजो विभुशम्भुपुरन्दरसूर्यमुखानपरानपरान् । सृजतीड्य-तमोऽवति हन्ति निजं पदमापयति प्रणतान् सुधिया । अतीतानागतकालयोः देवादिमत्वं दिव्यदृष्टीनां प्रत्यक्षात्सिद्ध्यति । उपरितनकालो देवादिमान् कालत्वात्संमतवदित्यन्येषामनुमानात्सिद्ध्यति । प्रलयकालस्य पक्षैकदेश-त्वान्न तत्र कालत्वेहेतोर्व्यभिचारः शङ्कनीयः। पर्वतैकदेशस्य अनग्निमत्वेऽपि न हि तत्र धूमवत्वहेतुर्व्यभिचरितो भवतीत्यर्थः। वैदिकेन्द्रादिना तदर्थप्रवाहोच्छेद इत्याह **अत इति**।

## ॐ अत एव च नित्यत्वम् ॐ ॥ २९ ॥

**अत एव शब्दस्य नित्यत्वादेव च देवप्रवाहनित्यत्वं युक्तम्॥ २९॥**

गतैर्देवैः समाननामरूपत्वाद्वर्तमानानां मुक्त्यनन्तरमपि अपुनरावृत्तावपि भविष्यद्देवेषु पूर्वेष्विव ब्रह्मरुद्रादिव्यवहाराविरोधः । तथा च श्रुतिः । यथा पूर्वमकल्पयदिति **समानेत्यादिना**।

## ॐ समाननामरूपत्वच्चावृत्तावप्यविरोधो दर्शनात्स्मृतेश्च ॐ ॥ ३० ॥

**अतीतानागदतानां देवानां समाननामरूपत्वात्प्राप्तपदानां मुक्त्याऽऽ-वृत्तावप्यविरोधः।**

**'यथापूर्वम् (महाना. ५-७)' इति दर्शनात्।**

**'अनादि निधना नित्या वागुत्सृष्टा स्वयम्भुवा।**

**ऋषीणां नामधेयानि याश्च वेदेषु दृष्टयः।**

**वेदशब्दभ्य एवादौ निर्ममे स महेश्वरः' इति स्मृतेश्च॥ ३०॥**

**॥ ॐ मध्वादिष्वसम्भवादनधिकारं जैमिनिः ॐ ॥ ३१ ॥**

**'वसूनामेवैकोभूत्वा (छां. ३-६-२)' इतियादिना प्राप्यफलत्वात्प्राप्तपदानां देवानां मध्वादिविद्यास्वनधिकारं जैमिनिर्मन्यते ॥३१॥**

स्वयम्भुवा महेश्वरेण विष्णुनया वेदवामनादिनिधनोत्सृष्टोच्चन्तिा तस्यामृषीणां ब्रह्मादीनां यानि नामानि स्थितानि यानि च दृश्यत्वात् दृश्याख्यानि रूपाण्युक्तानि तान्येव कल्पे कल्पे स्वसृष्टानां ब्रह्मादीनां स महेश्वरो निर्ममे चकार । यन्नामरूपा ब्रह्मादयो वेदोक्तास्तन्नामरूपांस्तत्र कल्पे सृजतीत्यर्थः । यदुक्तं देवादीनां ब्रह्मविद्यायामधिकारोस्तीति तन्न । मध्वादिब्रह्मविद्यायां यन्नाधिकारः सम्भवति । तथाहि । असौ वा आदित्यो देव मध्वित्यारभ्य एतदेवममृतं वेद वसूनामेवैको भूत्वाग्निनैव मुखेनैतदेवनामृतं दृष्ट्वा तृप्यतीत्यादिश्रुत्या मध्विति वसुरुद्रादित्यपदं श्रूयते । न हि तस्यां विद्यायां प्राप्तवस्थादिपदानां देवानामधिकारः सम्भवति । मध्वित्यादिना हेत्वन्तरेणैतत्साधयति **ज्योतिषित्यादिना** ।

**॥ ॐ ज्योतिषि भावाच्च ॐ ॥ ३२ ॥**

**ज्योतिषि सर्वज्ञत्वे भावाच्च । आदित्यप्रकाशेऽन्तर्भाववत्तज्ज्ञाने सर्ववस्तूनामन्तर्भावात् । नित्यसिद्धत्वाच्च विद्यानाम् ॥ ३२ ॥**

**॥ ॐ भावं तु बादरायणोऽस्ति हि ॐ ॥ ३३ ॥**

**फलविशेषभावात्प्राप्तपदनामपि देवानां मध्वादिष्वप्यधिकारं बादरायणो मन्यते । अस्ति हि प्रकाशविशेषः ।**

यदुक्तं फलाभावात् सर्वापरोक्षदर्शित्वेनोपासनवैय्यर्थ्याद्दिवानां मध्यादिविद्यास्वनधिकार इति तत् पुराणवचनेन दूषयति **यावदित्यादिना** ।

**'यावत्सेवा परे तत्वे तावत्सुखविशेषता।**

**सम्भवाच्च प्रकाशस्य परमेकमृते हरिम्॥**

**तेषां सामर्थ्ययोगाच्च देवानामप्युपासनम्।**

**सर्वं विधीयते नित्यं सर्वयज्ञादिकर्म च' इति स्कान्दे॥**

आदित्य एव मध्वित्युक्तं परब्रह्म वस्वादयो देवाः यावद्या वदधिकमुपासते तावदधिकं सुखं लभन्ते । सूर्यादिषु प्रकाशतारतम्यवद्देवेष्वपि ज्ञानप्रकाशतारतम्यात् परतत्वस्य ज्ञानांशोपासनविद्युपपत्तिरित्यर्थः । मध्वादिष्वसम्भवादनधिकारं जैमिनिरित्युपन्यस्तेन जैमिनिमतेन भगवद्बादरायणमतस्य विरोधमाशङ्क्य परिहरति **उक्तफलेत्यादिना**।

**उक्तफलानधिकारमात्रं जैमिनिमतम्। अतो न तन्मतविरोधः।**

**'सर्वज्ञस्यैव कृष्णस्य त्वेकदेशविचिन्तितम्।**
**स्वीकृत्य मनुयो ब्रूयुस्तन्मतं न विरुद्धयिते' इति ब्राह्मे॥ ३३॥**

श्रुत्युक्तवसुरुद्रादित्यमात्रोद्देशेन देवानां ब्रह्मोपासनाधिकारो निषिद्धो न तु फलान्तरोद्देशेनेति जैमिनिमतम्। तच्च कृष्णद्वैपायनमतैकदेशेनोक्तं सर्वज्ञस्येति वचनेन। अतो नास्ति विरोध इत्यर्थः।

*॥ इति देवताधिकरणम् ॥ ८ ॥*

ननु यदि वेदविद्याधिकारिणो मनुष्यत्वविशेषणेपि देवानां विशिष्टबुद्ध्यादिभावेनाधिकारसम्भवान्निषेधाभावाच्च न तत्र नाधिकारः । तद्धीनतिर्यगादिवत् । तर्ह्यनेन न्यायेन शूद्राणां सुतरां अधिकारः मनुष्यत्वाविशेषात्। यदि निषिद्धस्तेषां तर्हि किमर्थं वैदिकाग्रणी रैक्वः शूद्रं पौत्रायणं वेदविद्यां श्रावयेत् । न चासावशूद्रः शूद्र इति तेन संबोधनादितिभावेनाशङ्क्यैतां परिहरत्सूत्रमुपन्यस्य व्याचष्टे **मनुष्येत्यादिना**।

मनुष्याधिकारत्वादित्युक्तेऽविशेषाच्छूद्रस्यापि 'अह हारेत्वा शूद्र (छां.४-२-३)' इति पौत्रायणोक्तेरधिकार इत्यत आह—

**॥ ॐ शुगस्यतदनादरश्रवणात्तदाद्रवणा-
त्सूच्यते हि ॐ ॥ ३४ ॥**

**नासौ पौत्रायणः शूद्रः। शुचाऽऽद्रवणमेव शूद्रत्वम्।**

**'कम्बर एतमेतत्सन्तम् (छां. ४-१-३)' इत्यनादरश्रवणात्।**
**'स हि सञ्जिहार एव क्षत्तारमुवाच (छां. ४-१-५)'**

**इति सूच्यते हि ॥ ३४ ॥**

अहेति सम्बोधनम्। हारो विष्णुः उरो भूषणं इत्वा रथः तदुभयं हि गोभिः सह तेनोपनीतम्। न पौत्रायणः चतुर्थवर्णः किन्तु 'सन्तमुत्तमं सयुग्मानं रैक्वं प्रतीवकम्वेनं एतद्वचनं आत्थे'ति हंसोक्तानादरश्रवणादतिशोकोपहत-त्वाच्छूद्रेत्युक्तः। शोकाभावे शयनात्संजिहान एव स कथं रैक्वान्वेषणे क्षतारं नियुञ्ज्यादित्यर्थः। ननु पद्मे पङ्कजशब्दनिरुक्तिवच्चतुर्थवर्ण एवायं किं न स्यादित्याशङ्क्य परिहारायोत्तरसूत्रमवतार्य व्याचष्टे **क्षत्रियत्वेत्यादिना**।

**॥ ॐ क्षत्रियत्वावगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ॐ ॥ ३५ ॥**

**अयमश्वतरीरथः' इति चित्ररथसम्बन्धित्वेन लिङ्गेन पौत्रायणस्य क्षत्रियत्वावगतेश्च।**

**'रथस्त्वश्वतरीयुक्तश्चित्र इत्यभिधीयते' इति ब्रह्माण्डे।**
**'यत्र वेदोरथस्तत्र न वेदो यत्र नो रथः' इति ब्रह्मवैवर्ते॥ ३५॥**

ध्रुवश्चित्ररथश्चरालीत्यादौ क्षत्रियस्य चित्ररथः प्रतीयते। न हि तथा विप्रवैश्ययोः क्वचित्। शूद्रस्य तु वेदाभावाद्रथ एव नास्ति कुतश्चित्ररथ इति

भावः । ननु मास्तु पौत्रायणः शूद्रः वेदस्तु शूद्रस्य अपि भवत्येव निषेधाभावादित्याशङ्कापरिहाराय सूत्रमवतार्य व्याचष्टे **संस्कारेत्यादिना।**

**॥ ॐ संस्कारपरामर्शात्तदभावाभिलापाच्च ॐ ॥ ३६ ॥**

**'अष्टवर्षं ब्राह्मणमुपनयीत, तमध्यापयीत'**

**इत्यध्ययनार्थं संस्कारपरामर्शात्।**

**'नाग्निर्न यज्ञो न क्रिया न संस्कारो न व्रतानि शूद्रस्य'**

**इति पैङ्गिश्रुतौ संस्काराभावाभिलापाच्च।**

**उत्तमस्त्रीणां तु न शूद्रवत्।**

**'सपत्नीं मे पराधम (मन्त्र. प्र. १-१६)' इत्यादिष्वधिकारदर्शनात्।**

**संस्काराभावेनाभावस्तु सामान्येन। अस्ति च तासां संस्कारः।**

**'स्त्रीणां प्रदानकर्मैव यथोपनयनं तथा' इति स्मृतेः ॥ ३६ ॥**

**॥ ॐ तदभावनिर्धारणे च प्रवृत्तेः ॐ ॥ ३७ ॥**

**'नाहमेतद्वेद भो यद्गोत्रोऽहमस्मि (छां. ४-४-४)' इति सत्यवचनेन सत्यकामस्य शूद्रत्वाभावनिर्धारणे हारिद्रुमतस्य 'नैतदब्राह्मणो विवक्तुमर्हति' इति तत्संस्कारे प्रवृत्तेश्च ॥ ३७॥**

'नाग्निर्न यज्ञो न संस्कार' इति श्रुतौ संस्काराभाव एव शूद्रस्योच्यते स त्वसौ म कार्य इति स कर्तव्य एव श्रेयोर्थिभिः बलिजैरिव सदाचारस्थदभावो वेदादिना नैतद्ब्राह्मण इति । ब्रह्मवेदस्तदब्राह्मण इति शूद्र एव विवक्षितो न क्षत्रियादिः । तथा हि तद्भाष्ये सामसंहितालक्षण इति । यदि

शूद्रस्याप्यप्युपनयनादियोग्यत्वं तर्हि कथमाचार्यवर्यः शूद्राभावो निर्धाय तत्र प्रवृत्त इत्यर्थः । न केवलमुपनयनप्रतिषेधाच्छूद्रस्याध्ययनाभावः किन्तु प्रतिषेधादपीतिभावेनोत्तरं सूत्रमवतार्य व्याचष्टे **श्रवणेत्यादिना**।

## ॥ ॐ श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्च ॐ ॥ ३८ ॥

**'श्रवणे त्रपुजतुभ्यां श्रोत्रपरिपूरणम् । अध्ययने जिह्वाच्छेदः । अर्थावधारणे हृदयविदारणम् (गौतमधर्म. १२-४-७)' इति प्रतिषेधात्।**

**'नाग्निर्न यज्ञश्शूद्रस्य तथैवाध्ययनं कुतः।**

**केवलैव तु शुश्रूषा त्रिवर्णानां विधीयते' इति स्मृतेश्च।**

न तु तर्हि कथं विदुरः सर्ववेत्ता त्रिषूच्यते। कथं च क्षत्रसंस्कारयुतः कर्णो निखिलश्रुतीरधिजगावित्युच्यत इत्यत आह **विदुरादीनमिति**।

**विदुरादीनां तु उत्पन्नज्ञानत्वात्कश्चिद्विशेषः॥ ३८॥**

उत्पन्नापरोक्षज्ञानित्वात्कश्चिद्विशेषः कश्चिदितरशूद्रादिभ्य इत्यर्थः । अतोऽन्येषां शूद्रादीनां मनुष्यत्वेऽपि न विद्याधिकारः इति सिद्धम्।

*॥ इति अपशूद्राधिकरणम् ॥ ९ ॥*

ऊर्ध्वं प्राणमुन्नयतीत्यत्र विष्णुः प्रतिपाद्यत इति यदुक्तं तद्दृढीकर्तुं तत्प्रकरणस्थं वाक्यमुदाहृत्य विचारयति **यदिदमित्यादिना**।

**'यदिदं किञ्च जगत्सर्वं प्राण एजति निःसृतम्।**

**महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति (कठ. २-३-२)'**

**इत्युद्यतवज्रज्ञानान्मोक्षः श्रूयत इत्यतोऽब्रवीत्—**

## ॥ ॐ कम्पनात् ॐ ॥ ३९ ॥

'एजति' इति कम्पनवचनादुद्यतवज्रो भगवानेव।

'को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यात्
(तै. २-७)' इति हि श्रुतिः।

'प्राणस्य प्राणमुत चक्षुषश्चक्षुः (बृ. ६-४-१८)' इति च।

'नभस्वतोऽपि सर्वाः स्युश्चेष्टा भगवतो हरेः।

किमुतान्यस्य जगतो यस्य चेष्टा नभस्वतः' इति स्कान्दे।

'चक्रं चङ्क्रमणादेष वर्जनाद्वज्रं उच्यते।
खण्डनात्खड्ग एवैष हेतिनामा स्वयं हरिः'

इति ब्रह्मवैवर्ते॥ ३९॥

*॥ कम्पनाधिकरणम् ॥ १० ॥*

हृदय आहितं ज्योतिः परमात्मेत्युक्तम्। तत्र 'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः (बृ. ६-३-७)' इत्यत्र 'उभौ लोकावनुसञ्चरति (बृ. ६-३-७)' इति वचनाज्जीव इति प्रतीयत इत्यत उच्यते॥

## ॥ ॐ ज्योतिर्दर्शनात् ॐ ॥ ४० ॥

'विष्णुरेव ज्योतिर्विष्णुरेव ब्रह्म विष्णुरेवाऽत्मा विष्णुरेव बलं विष्णुरेव यशो विष्णुरेवानन्दः' इति दर्शनाच्चतुर्वेदशिखायां ज्योतिर्विष्णुरेव। 'प्राज्ञेनाऽत्मनाऽन्वारूढ उत्सर्जद्याति (बृ. ६-३-३५)' इति वचनात्तस्यापि लोकसञ्चरणमस्त्येव॥ ४०॥

नात्र वज्रशब्दाभिधेयायुधविशेषः प्रतिपाद्यते। भयात् अग्निस्तपति भयात्तपति सूर्य इत्युत्तरवाक्यविरोधात्। भीषास्माद्वातः पवते इत्यादौ

विष्णुभयाद्धि सर्वकंपनं श्रूयते । अतो दैत्यैर्दूरादेव वर्ज्यते परिह्रियते न संमुखीक्रियत इति वज्रशब्दाभिधेयो विष्णुरित्यनवद्यम् ।

ननु हृद्यन्तर्ज्योतिः पुरुष आत्मा अतो जीवो भवितुमर्हति समानः सन्नुभौ लोकावनुसञ्चरन्तीति वाक्यशेषादतो हृदय आहितं ज्योतिः परमात्मेति यदुक्तं तन्न सिध्यतीति न वक्तव्यम् । विष्णुः एव ज्योतिरित्यादिश्रुतिविरोधात् । लोकद्वयसंचरणं तु परेशस्याप्यस्ति स्वेच्छावशादकर्मबद्धस्य । तथाहि श्रुतिः । शारीरआत्माप्राज्ञेनात्मनान्वारूढ उत्सर्जद्यातीति तदेतद्धृदय आहित-मित्यादिना ।

*॥ ज्योतिरधिकरणम् ॥ ११ ॥*

नन्वाकाशो वै नाम नामरूपयोर्निर्वहितेत्यत्र सर्वाधिकतयाप्याम्नातोप्याकाशो न विष्णुः । किन्तु भूताकाश एव वै नामेति प्रसिद्धिद्योतकनिपातश्रवणाल्लोकप्रसिद्धाकाशोहि भूताकाशे इति न वक्तव्यम् । ते यदन्तरा तद्ब्रह्मेति वाक्यशेषविरोधात् । यतो यमाकाशस्ते नाम रूपे विना ताभ्यामस्पृष्टो वर्तते । अतो नामरूपात्मकभूतभौतिकादिप्रपञ्चनिर्वाहत्वात् अर्थान्तरभूत इत्यर्थः । तद्ब्रह्म तदमृतं स आत्मेति निर्दिष्टमानत्वाच्च । नायमाकाशः । वै नामेत्यनेन प्रकाशमानो भगवान्नामरूपनिर्वहितेत्यत्र प्रसिद्धिद्योतकेन नामरूपातीतत्वं विष्णोरेव युज्यते । अगोत्रवर्णमचक्षुः श्रोत्रं यतो वाचो न निवर्तन्त इत्यादिश्रुतेः । अनामा सोऽप्रसिद्धत्वादरूपो भूतवर्जनादिति वचनान्नात्र विरोधः शङ्कनीयः । तदिदमुक्तं **सर्वाधार-मित्यादिना** ।

**सर्वाधारत्वं विष्णोरुक्तम् । तच्च**

**'आकाशो वै नाम नामरूपयोर्निर्वहिता (छां. ८-१४-१)' इत्यत्राऽकाशस्य प्रतीयते । वै नामेति प्रसिद्धोपदेशात् । प्रसिद्धा-**

काशश्चाङ्गीकर्तव्य इत्यत उच्यते—

॥ ॐ आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॐ ॥ ४१ ॥

'ते यदन्तरा तद्ब्रह्म (छां. ८-१४-१)'

इत्यर्थान्तरत्वादिव्यपदेशादाकाशो हरिरेव।

'अवर्णं' 'यतो वाचो निवर्तन्ते (तै. २-४)'

इत्यादिश्रुतेस्तस्यैव हि तल्लक्षणम्।

'अनामा सोऽप्रसिद्धत्वादरूपो भूतवर्जनात्' इति ब्राह्मे ॥ ४१ ॥

*॥ इति आकाशाधिकरणम् ॥ १२ ॥*

असङ्गत्वं परमात्मन उक्तम्। तच्च

'स यत्तत्र किञ्चित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुषः

(बृ. ६-३-१५)'

इति स्वप्नादिद्रष्टुः प्रतीयते। स च जीवः प्रसिद्धेरित्यतो व्यक्ति—

॥ ॐ सुषुप्त्युत्क्रान्त्योर्भेदेन ॐ ॥ ४२ ॥

नन्वसङ्गत्वेन श्रुताज्जीवादर्थान्तरत्वं परमात्मनः कथमित्याशङ्क्य परिहरति **प्राज्ञेनेत्यादिना**।

'प्राज्ञेनाऽत्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नाऽन्तरम्

(बृ. ६-३-२१)'

'प्राज्ञेनाऽत्पनाऽन्वारूढ उत्सर्जद्याति (बृ. ६-३-३५)'

इति भेदव्यपदेशान्न जीवः पर एवासङ्गः।

**सुषुप्तीत्यादिना । सन्ध्यं तृतीयं स्वप्नस्थानमित्यारभ्य स यत्तत्र किञ्चित्पश्यति । अनन्वागतस्ते न भवति असङ्गो ह्ययं पुरुष इत्येतत्परमात्मनि घटयति** स्वप्नादीति ।

**स्वप्नादिद्रष्टृत्वं च सर्वज्ञत्वात्तस्यैव युज्यते ॥ ४२ ॥**

न हि कर्मबद्धस्य जीवस्यासङ्गत्वमुपपद्यते । अतोऽर्थान्तरभूतः परमात्मा जीवात् । प्राज्ञेनात्मना सम्परिष्वक्त इत्यादि श्रुतेरित्यर्थः ।

न च स वा एष महानज आत्मेति सन्निहितवाक्यबलादेष नित्यो महिमा ब्राह्मणस्येति तदपि हिरण्यगर्भविषयं सर्वस्याधिपतिरित्यादिबहुवाक्यविरोधापत्तेः । हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीदित्यादि श्रुत्या हिरण्यगर्भस्याजातलोकाधिपत्यनिषेधेन सर्वाधिपत्त्याभावात् न चेन्द्रादिवद्विद्याकर्मलब्धपदत्वेन देवाधिकारिणो हिरण्यगर्भस्य नित्यमहिमत्वं युज्यते । न च हिरण्यगर्भेतन्देवविषयं तद्वाक्यं तत्र प्रमाणाभावात्स्वधर्मनिष्ठः शतजन्मभिः पुमान्विरिञ्चतामेतीत्यादिवचनविरोधाच्च । उतामृतस्येशान इत्यादिति श्रुत्यन्तरविरोधात् । सर्वस्याधिपतिः सर्वेशानः एष सेतुर्विधरण एषां लोकानामसम्भेदाय स एष नेति नेत्यात्मा गृह्यो न हि गृह्यत इत्यादिवाक्यं विष्णुविषयमेव । तस्माद्ब्रह्मशब्दवाच्यवेदेन गम्यत्वाद्ब्राह्मणशब्दवाच्योऽजातत्वादजशब्दवाच्यो विष्णुरिति सिद्धम् । दशप्रमतिवरदः प्रीयताम् ।

इति श्री सत्तर्कदीपावल्यां प्रथमाध्यायस्य तृतीयः पादः ।

*॥ इति सुषुप्त्यधिकरणम् ॥ १३ ॥*

**'एष नित्यो महिमा ब्राह्मणस्य (बृ. ६-४-२२)' इति ब्राह्मणस्यापि नित्यमहिमा प्रतीयते । स च ब्राह्मणः 'स वा एष महानज आत्मा (बृ. ६-४-२४)' इत्यजशब्दाद्विरिञ्च इति प्राप्तम् । देवानां च विद्याकर्मणोः पदप्राप्तिः सूचिता तदुपर्यपीति । अतो ब्रवीति—**

## ॥ ॐ पत्यादि शब्देभ्यः ॐ ॥ ४३ ॥

**'सर्वस्याधिपतिः सर्वस्येशानः स वा एष नेति नेति (बृ. ६-४-२२)' इत्यादि शब्देभ्यो नित्यमहिमा विष्णुरेव। 'उतामृतत्वस्येशानो यदन्नेनातिरोहति (तै. आ ३-२२)'। 'सप्तार्धगर्भा भुवनस्य रेतो विष्णुस्तिष्ठन्ति प्रदिशा विधर्मणि (ऋ. १-१६४-३६)'। 'स योऽतोऽश्रुतः (ए. आ ३-२-४)' इत्यादि श्रुतिभ्यस्तस्यैव हि ते शब्दाः ॥ ४३ ॥**

*॥ इति ब्राह्मणाधिकरणम् ॥ १४ ॥*

इति श्रीमत्कृष्णद्वैपायनकृत ब्रह्मसूत्रभाष्ये श्रीमदानन्दतीर्थभगवत्पादाचार्य विरचिते प्रथमाध्यायस्य तृतीयः पादः ॥ १ ॥ ३ ॥

अधिगते सर्वाधिकासाधारणे समन्वये अतिमुख्याधिकारिविषये महासमन्वये दुर्गमेऽपि बुद्धिरप्रभवतीत्यधुना सोऽभिधीयते भगवत इति भावेन पादार्थमाह **श्रुतिर्लिंगादिभिरिति**।

न च अन्यत्र प्रसिद्धानां अन्नप्राणेन्द्रादिशब्दानां समन्वयः प्रथमपादे एवोक्तः न हि विष्णवावपि प्रसिद्धाः। तथा च सति तृतीयपादभेदानुपपत्तिरित्यात उक्तम् **श्रुरिलिङ्गादिभिरिति**।

**॥ श्रुतिलिङ्गादिभिरन्यत्रैव प्रसिद्धानामपि शब्दानां सामस्त्येन विशेषहेतुभिर्विष्णावेव प्रवृत्तिं दर्शयत्यस्मिन्पादे॥**

अत्र प्राणेन्द्रादिशब्दानां बलवच्छ्रुत्यादिभिः विष्णौ समन्वय उक्तः। दुःखादिशब्दानां तु तैरप्यन्नत्रैव प्रसिद्धेः। प्रसिद्धश्चायं विशेषोन्नादि शब्देभ्यो

दुःखादिशब्दानाम् । न चैतत्पादतया गोचरः कोऽपि वैदिकशब्दः दुर्गमत्वेऽपि शिष्यत इति वोत्तराधिकरण एकस्मिन्नेव स्वरवर्णपदात्मनापि सर्ववेदसमन्वयाभिधानात् वा सामस्त्येनेति । न चैवं सति भगवतः पुनरुक्तिसम्भवो वा शङ्कनीय इत्याह **विशेषहेतुभिरिति**।

## ॥ ॐ आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॐ ॥ १ ॥

ननु येषां वेदवचसामन्यपरत्वे ब्रह्मलक्षणमतिव्यापकं स्यात्तेषामेव समन्वयोऽभिधेयो न तु सर्वेषामिति शङ्कां परिहरत्सूत्रमुपन्यस्य तदेशोक्तं पूर्वपक्षं सविषयं सहेतुकं दर्शयति **तत्त्विति**।

**'तत्तु समन्वयात्' इति सर्वशब्दानां परमेश्वरे समन्वय उक्तः।**

ब्रह्मशब्दोक्तगुणसर्वस्वसिद्धये हि तल्लक्षणमुक्तं सर्वजगज्जन्मादि-कारणत्वात्सम्पूर्णं ब्रह्मेति । तदुभये चास्यमूलम् । न हि अनुमानिकमपि गुणसर्वस्वं शास्त्रं विना विशेषेण ज्ञातुं शक्यम् । अयमयं भगवद्गुण इति । अतस्तद्विशेषतो विज्ञापयितुं सर्वशब्दसमन्वयं समन्वयश्चतुर्थसूत्र उक्तः । **तन्न युज्यते इति**।

**तन्न युज्यते । यतः 'अव्यक्तात्पुरुषः परः (कठ. १-३-११)' इति साङ्ख्यानुमानपरिकल्पितं प्रधानमप्येकेषां शाखिनामुच्यत इति चेन्न।**

यस्मात्साङ्ख्यानुमानकल्पितमचित्प्रधानमप्यादिकार्यात् महतः परं विविधकार्याश्रयत्वेन व्याप्तमपि तत्तद्दोषानोक्तमिति सूक्ष्मं चेत्यादि महागुणमुच्यते । नायमव्यक्तशब्दार्थो भगवान् अव्यक्तात्पुरुषः पर इत्यस्य पुरुषादवरत्वावगमात् पुरुषश्च अव्यक्तात्पन्तोऽत्र जीवो भवितुमर्हति तस्य योनि मन्ये प्रपद्यन्त इत्यादिदुःखसम्बन्धापगमात् । न च भगवान् दुःखीबद्धो अवरो वा

सर्वप्रमाणविरोधात् । अतोऽत्र गुह्यं ब्रह्मेत्यादिवाक्यपर्यालोचनया अर्थाज्जीवपरयोरैक्यमागच्छतीत्यनया दिशा पूर्वपक्षकरणन्यायेन पूर्वपक्ष इति भावः। सिद्धान्तांशं व्याचष्टे **नेत्यादिना**।

**तस्यैव पारतन्त्र्याच्छरीररूपकेऽव्यक्ते विन्यस्तस्य परमात्मन एवाव्यक्तशब्देन गृहीतेः।**

जीवे हिंसाहेतुत्वात्तत्प्रेर्यमाणत्वाच्छरीररूपकमव्यक्तम्। तस्यैव भगवत एव। जीवस्य तच्छरीरत्वावगमात्। य आत्मा शरीरं यस्य तेजः शरीरमित्यादौ शरीन्तद्वतोश्च एकनियम्यत्वदर्शनात्। तद्गतस्य हरेरेव अव्यक्तनाम्ना उक्तेर्न उक्तदोष इत्यर्थः। शरीरस्वरूपमिव रूपमस्येति शरीररूपम्। जडाव्यक्तं तु शरीररूपमपि सम्यक् न भवति तुच्छशब्दादित्येतदर्थः कप्रत्यय इत्याह **कप्रत्यय इति**।

**कप्रत्ययः कुत्सने।**

ननु मञ्चस्थे मञ्चशब्दवदव्यक्तगहरावव्यक्तशब्दश्चौपचारिकः तत्रस्यादित्यत आह **परमात्मन एवेति**।

**परमात्मन एवाव्यक्तशब्दस्तत्तन्त्रत्वेन तच्छरीररूपत्वादितरस्याप्यव्यक्तशब्दः।**

तुच्छतमेतत् जडाव्यक्तिं विन्यस्तं चात्र परमात्मेत्येतदर्थत्वेन सूत्रोपात्तश्रुतिं दर्शयति **तुच्छेनेति**।

**'तुच्छ्येनाभ्वपिहितं यदासीत् (ऋ. १०-१२९-३)' इति दर्शयति च।**

तुच्छं न भवति गुणतो तमः शब्दोक्तं आसमन्तात् सर्वैर्गुणैः भूमात्मकम्। आनीदवातमित्युक्तं ब्रह्म। एवमव्यक्तविन्यस्तस्य परमात्मन

एवाव्यक्त शब्दो संख्यश्चेत् तत्र तस्य प्रयोगो योगश्चापेक्षितः । तत्र तावत्प्रयोगश्चापेक्षितः । तत्र तावत्प्रयोगाश्च शब्दसूचित श्रुतीतिहासयोत्स्तीत्याह **अव्यक्तमित्यादिना**।

**'अव्यक्तमचलं शान्तं निष्कलं निष्क्रियं परम्।**

**यो वेद हरिमात्मानं स भयादनुमुच्यते' इति पिप्पलादशाकायाम्।**

**'अक्षरं ब्रह्म परमं (भ. गी. ८-३)'**

**इत्युत्त्वा 'अव्यक्तोऽक्षर इत्युक्तः (भ. गी ८-३, २१)'**

**इति वचनाच्च ॥ १ ॥**

योगोऽप्यस्ति न व्यज्यत इत्यव्यक्तमिति । तद्योगं तु सूक्ष्ममेव । तच्च परं ब्रह्मैव विष्णवाख्यमित्येवं सप्रमाणकं प्रतिपादयत्सूत्रमुपन्यस्य व्याचष्टे **सूक्ष्मं त्वित्यादिना**।

## ॐ सूक्ष्मं तु तदर्हत्वात् ॐ ॥ २ ॥

**सूक्ष्ममेवाव्यक्तशब्देनोच्यते । तद्ध्यव्यक्ततामर्हति । सूक्ष्मत्वं च मुख्यं तस्यैव।**

**'यत्तत्सूक्ष्मं परमं वेदितव्यं नित्यं पदं वैष्णवं ह्यामनन्ति।**
**यत्तल्लोका न विदुर्लोकसारं विन्दन्त्येतत्कवयो योगनिष्ठा'**

**इति च पिप्पलादशाखायाम्।**

प्रधानस्यापि सूक्ष्मत्वात् तत्राप्ययं योगः किं न स्यादित्यत आह **मुख्येचेदिति**।

**मुख्ये च विद्यमाने नामुख्यं युक्तम्॥ २॥**

( यदीशवदतिसूक्ष्मत्वाभावादानुमानिकस्याव्यक्तत्वं अव्यक्तशब्दप्रवृत्त-निमित्तभूतार्थरहितमनतिमुख्यं तर्ह्यवन्दु:खिबद्धादि शब्दप्रवृत्तिनिमित्तजाड्या-दु:खबद्धार्थरहितमवरत्वदु:खबद्धत्वादिकर्मोपचारिकमेव स्यात् भगवतः । अतोऽत्र प्रधानजीवावेवाव्याक्तपुरुषशब्दोक्ताविदि-शङ्कापरिहारत्वेनोत्तरसूत्र-मयतार्य व्याचष्टे **तदधीनत्वादित्यादिना**। )

## ॥ ॐ तदधीनत्वादर्थवत् ॐ ॥ ३ ॥

तदधीनत्वाच्चाव्यक्तत्वादीनां तस्यैवाव्यक्तत्वपरावरत्वादिकमर्थवत् ।

न केवलं प्रकृतिजीवयोः अव्यक्तत्वपरत्वपुरुषत्वादीनामीशापेक्षया अत्यल्पसूक्ष्मत्वादतिसूक्ष्मस्य सर्वोत्तमस्यतिपुरुषषड्गुणस्येव अव्यक्तत्वादि-कमव्यक्तशब्दादिप्रवृत्तिनिमित्तार्थवत् । किन्तु तद्गताव्यक्तत्वपरत्व-पुरुषत्वादीनामपि ईशाधीनत्वाच्च । ईश्वरस्य तु निरनिष्टो निरवद्य इत्यादिश्रुत्या दोषासंस्पर्शनियमात् । अवरत्वदु:खित्वबद्धत्वादीनां अन्यगतानामेव ईशाधीनत्वात् । तस्यैवावरत्वादिकमर्थवत् प्रकृत्यादिगतादित्येषादिक् । अतोऽसावेवातिमुख्यतो अव्यक्तपुरुषपरावन्दु:खिशब्दार्थः ।/ कथमन्यथा राज्ञिजयशब्दप्रयोगो अतिबहुभिः। यामृध्नत्यविषयं तदाह **यदधीन इति**।

**'यदधीनो गुणो यस्य तद्गुणी सोऽभिधीयते।**
**यथा जीवः परात्मेति यथा राजा जयीत्यपि'**

**इति च स्कान्दे ॥ ३ ॥**

यथा अवरात्मा जीव इत्युच्यते । अनेन जीवेनेत्यादावित्यर्थः । यो यं पुरुषार्थमिच्छति तस्य तदवाप्तये तदेवावश्यं विज्ञेयमित्युच्यते एतदेवाक्षरं ब्रह्मेत्यादौ । तदेवात्रोपनिषदि तथावद्वक्तव्यम् । जीवप्रधानादेस्तद्वचनात् । रूढमाह **ज्ञेयत्वेति**।

## ॐ ज्ञेयत्वावचनाच्च ॐ ॥ ४ ॥

**अन्यस्य न वाच्यत्वं युज्यते ॥ ४ ॥**

(ननु महतः सुतरां परं जीवं परमात्रं प्रधानं च उभयं च द्वयं निचाय्य मुच्यत इति ज्ञेयत्वोक्तेः । तयोरेवात्र वाच्यतया तदुभयविवेकज्ञानं मुक्ति-साधनमिति भावेन सूत्रपूर्वपक्षांशं व्याचष्टे **वदतीत्यादिना**। )

## ॥ ॐ वदतीतिचेन्न प्राज्ञो हि ॐ ॥ ५ ॥

**'महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते (कठ. १-३-१५)'**

**इति ज्ञेयत्वं वदतीति चेन्न। प्राज्ञः परमात्मा हि तत्रोच्यते।**

**'अणोरणीयान्महतो महीयान् (कठ. १-२-२०)' इति तस्यैव हि महतो महत्वम्।**

(महतः परं ध्रुवमित्यत्र परमात्मैवोच्यते परशब्देन । महतो महीयानात्मेत्यात्मनो महतो महत्वप्रसिद्धेः । न चायमात्माजीवः तस्याणोर्महतो महत्वायोगादिति भावेन सिद्धान्तांशं व्याचष्टे । नन्वस्तु महतो महत्वं परमात्मनः प्रधानस्यापि तत्वान्तरपरत्वं तु ततोपि । अतो महतः परं प्रधानमेवेत्यत आह **सर्वस्मादिति**। )

**सर्वस्मात्परस्य महतोऽपि परत्वं युज्यते ॥ ५ ॥**

(ननु प्रकृतिपुरुषयोरुभयोरपि महतः परत्वे महतः परं ध्रुवमित्यत्र पुरुषस्यैव ग्रहणे को हेतुरित्यत आह **प्रकरणादिति**।)

## ॥ ॐ प्रकरणात् ॐ ॥ ६ ॥

**'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् (कठ. १-३-९)' इति तस्य ह्येतत्प्रकरणम् ॥ ६ ॥**

पृथिव्यादिप्रकृत्यन्तनिकाये स्वकीये स्यामुपनिषद्युक्तवक्ष्यमाणप्रकारेण रथाख्ये पुरुषाख्ये वा श्रीविष्णोः परमस्थाने तिष्ठत्ययं जीवराशिरतः सकलमिदं अहं त्वं च तदायत्तमिति यो विजानाति संसाराध्वनः परमाप्नोति तत्परं विष्णोः परमं स्थानं क्षीराब्ध्यादौ मुक्तप्राप्यमिति मोक्षदविष्णुप्रकरणत्वात् । महतः परं ध्रुवं निचाय्येति स एव ज्ञेयत्वेनोच्यत इत्यर्थः । यथा प्रकरणं महतः परं ध्रुवमित्यादौ भगवतोऽन्यस्य ज्ञेयत्वानुक्तौ प्रमाणम् । एवं प्रश्नोपन्यासावपीत्याह **त्रयाणामिति**।

## ॥ ॐ त्रयाणमेव चैवमुपन्यासः प्रश्नश्च ॐ ॥ ७ ॥

**त्रयाणामेव पितृसौमनस्यस्वर्ग्याग्नि परमात्मनां प्रश्न उपन्यासश्च।**

ननु पितृसौमनस्यं प्रार्थनीयमेव न प्रष्टव्यम् । अन्यथा तस्य भगवतः अन्यस्यैव प्रश्नोपन्यासविषयत्वेन ज्ञेयत्वापत्तेः पूर्वसूत्रविरोध इत्यत आह **अविज्ञातेति**।

**'अविज्ञातप्रार्थनं च प्रश्न इत्यभिधीयते'॥**

**इति वचनान्न विरोधः॥७॥**

पितृसौमनस्यस्य तदा तेनाज्ञातत्वात् तद्विषयप्रार्थनां च प्रश्नः । एतादृक्प्रश्नोपन्यासविषयत्वं न ज्ञेयत्वापादकमितिभावः ।)

( शब्दप्रवृत्तिनिमित्तमुख्यत्वपर्यालोचनया महान्तं विभुमात्मानं इत्यादाविव महतः परं ध्रुवमित्यादावपि भगवानेव ज्ञेयत्वेनोच्यत इति सिद्ध्यतीत्याह **महद्वच्चेत्यादिना**। )

## ॥ ॐ महद्वच्च ॐ ॥ ८ ॥

**यथा महच्छब्दो महत्तत्वे प्रसिद्धोऽपि परममहत्त्वात्परमात्मन एव मुख्यः एवमितरेऽपि॥८॥**

यथा भगवन्महत्वमभिहितं तद्भक्तस्य परत्वध्रुवत्वाद्यनन्तत्वादयोपीत्यर्थः ।

एवं भगवत एव ज्ञेयत्ववचनात् स एवाव्यक्तपुरुषपरावरदुःखिशब्दार्थः । इतोपि स एवैतच्छब्दार्थ इत्याह **चमसवदित्यादिना** ।

**॥ ॐ चमसवदविशेषात् ॐ ॥ ९ ॥**

**यथा चमशब्दोऽन्यत्र प्रसिद्धोऽपि**

**'इदं तच्छिर एष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्नः (बृ. ४-२-३)'**

**इति श्रुतेः शिरोवाचकः, एवमव्यक्तादिशब्दाः सर्वेऽन्यत्र प्रसिद्धा अपि**

**'नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति'**

**इत्यादि श्रुतेः परमात्माभिधायका एव अविशेषाच्छ्रुतेः ॥ ९ ॥**

*॥ आनुमानिकाधिकरणम् ॥ १ ॥*

यद्यपि त्रयाणामेवेतिसूत्रे भगवतोऽन्यस्य ज्ञेयत्वानुक्तिप्रतिपादनपरे अग्निस्थस्य तस्यैव अग्निशब्दपरममुख्यार्थत्वमुक्तम् । तदन्वितार्थस्वार्थाभिधानेन अग्निकाण्डस्य तत्र वाक्यसमन्वयश्च । अनेनैव न्यायेन ज्योतिरादिकर्मस्वपीन्द्रादिगतस्य भगवत एव तच्छब्दार्थपरममुख्यार्थत्वेन सर्वयज्ञेड्यत्वात् । समग्रस्यापि कर्मकाण्डस्य तत्र वाक्यसमन्वयश्च । तथापि तस्य प्रतिपादकत्वं भगवद्वाचकत्वे न युज्यते । कर्मक्रमकालाद्युक्त्या भगवद्वाचकत्वस्य विशेषेण विरोधात् । न च जातमोतमित्यादिव्युत्पत्त्या भगवद्वाचकत्वम् । तया कर्मक्रमादिवाचकत्वस्य विशेषेण विरोधापत्तेः । जातादिशब्दानामपि भगवद्वाचकत्वेन व्युत्पत्तेरप्यशक्यत्वादितिभावेन पूर्वपक्षमाह **वसन्त इत्यादिना** ।

'वसन्ते वसन्ते ज्योतिषा यजेत' इत्यादि कर्माभिधायकस्य कर्मक्रमादिविरोधान्न युज्यत इत्यत आह—

**॥ ॐ ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके ॐ ॥ १० ॥**

**ज्योतिरादिकर्मवाचकत्वेन प्रसिद्धाभिधेयोऽपि स एव।**

**'एष इमं लोकमभ्यार्चत्' इत्युपक्रम्य '**

**ता वा एताः सर्वा ऋचः सर्वे वेदास्सर्वे घोषाः एकैव व्याहृतिः प्राण एव प्राणऋच इत्येव विद्यात् (ए.आ. २-२-२)'**

**इति ह्यधीयत एके ॥ १० ॥**

ज्योतिष्टोमादिकर्मवाचकत्वेन प्रसिद्धशब्दार्थोपि भगवानेव यथा तदिज्येन्द्रवाय्वादिशब्दार्थोऽसौ । न च तद्वाचकत्वं कर्मक्रमाद्युक्तिं विरुणद्धिज्ञातमोतमित्यादिव्युत्पत्तिसम्भवात् । व्युत्पत्त्यैव ह्यध्यायोप-क्रमादारभ्य सूक्त ऋगर्धर्चगदाक्षरा तद्वृक्षमुनिवाचकत्वेन प्रसिद्धशब्दानां भगवद्वाचकत्वं विद्वद्रूढिं च तद्विषयां प्रदर्श्य तथैव सर्ववेदानां भगवदर्थत्वमभिधीयते । श्रीमन्महैतरेय इत्यर्थः । न केवलं व्युत्पत्तिसम्भवात् कर्मक्रमादिविरोधपरिहारः किं तर्हीत्यत आह **कल्पनेत्यादिना।**

**॥ ॐ कल्पनोपदेशान्न मध्वादिवदविरोधः ॐ ॥ ११ ॥**

**मधुविद्यादिवत् सर्वशब्दार्थत्वेन परस्य कल्पनोपदेशाच्च न कर्मक्रमादिविरोधः ॥ ११ ॥**

मध्वाख्यस्यातिरोवंशाश्रितान्तरिक्षाख्यवायुमध्वरूपरथादित्यमण्डलान्तर्गतस्य भगवतः पञ्चमूर्तेरग्न्यादिप्रधानवस्वादिमधुकरमुखसंस्पर्शेन पञ्चधा विभिन्न ऋगादि सर्ववेदाख्यपुष्पोत्थ यशस्तेज इन्द्रियवीर्यान्नाद्यात्मकमधुरसत्वे कल्पनापि मधुविद्या आदिशब्दादिदन्तच्छिर एष ह्यर्वाम्बिलश्चमस इत्यादि ।

तद्वदेव सर्वे वेदघोषाः सर्वदा यत्पदमामनन्ति यमिन्द्रमित्यादिवाक्यैरपि इन्द्रं मित्रमित्यादिवाक्यैरपि ज्योतिरादिकर्मक्रमकालादिप्रसिद्धसर्वशब्दार्थत्वेन सर्वस्मात्परत्वेन परस्य परमात्मनः कल्पनोपदेशात् । न कर्म क्रमकालाद्युक्त्या भगवद्वाचकत्वविरोधो भगवदुक्त्या वा कर्मक्रमादिवाचकत्वविरोध इत्यर्थः । न हि तिरोवंशादिशब्दानां व्याद्यवाचकत्वे द्यौरेव तिरश्चनिवंशा इत्याद्यौपदेशिककल्पना युज्यते । एवं च रुढरुढयोगादिशब्दवृत्तिभेदाज्जातादिशब्दानां अर्थान्तरेऽपि मुख्यमात्रवृत्तौ सत्यां तत्पूर्वकत्वेन महायोगवृत्या परमेश्वरे ज्योतिरादिसर्वशब्दव्युत्पत्तिः शक्तैव । यज्ञो वै विष्णुः अहं ऋतुरहं यज्ञः त्वं क्रतुस्त्वंहविस्त्वं हुताशः स्वयमित्यादि विद्वद्रूढिदर्शनेपि बालरुढ्यभावादेव कल्पनोपदेशः । अतः प्रतिपदं च भगवद्वाचकत्वं सर्ववेदानामिति सिद्धम् ।

*॥ इति ज्योतिरुपक्रमाधिकरणम् ॥ २ ॥*

नन्वेवमपि ये बहुसङ्ख्याभिवायिनः शब्दाः न ते विष्णुवाचकाः तस्य एकत्वात् । एकत्वबहुत्वयोः परस्परं विरोधादितीमं पूर्वपक्षं प्रतिक्षिपति **न सङ्ख्येत्यादिना**।

## ॥ ॐ न सङ्ख्योपसङ्ग्रहादपि नानाभावादतिरेकाच्च ॐ ॥ १२ ॥

बहुसङ्ख्याभिधायित्वेपि पञ्चजनशब्दस्य न भगवद्वाचकत्वविरोधः । भगवत एव आकाशप्राणचक्षुः श्रोत्रान्नमनस्सुबहुरुपत्वेन प्रादुर्भूतत्वात् तदाधारत्वेन तदतिरिक्तस्वरुपत्वात् । तथा चायं वाक्यार्थः । यस्मिन् सर्वदेहगते परमात्मनि प्रतिदेहं पञ्चपञ्चजना आकाशाख्या प्रकृतिश्च प्रतिष्ठिताः । स्वयं च षडन्तर्नियामको अतिमुख्यतः तन्नामा लीलया स्वस्मिन्नेव प्रतिष्ठितः । एवमुक्तप्रकारेण सर्वशब्दवाच्यं तं परमात्मानं परब्रह्मविद्वान् स पञ्चाऽन्योऽमृतो भवतीति । के पञ्चपञ्च जनाः येषां विष्णुत्वमेवावधेयत्वमित्यत आह **पञ्चपञ्चेति**

**'यस्मिन् पञ्च पञ्च जना आकाशश्च प्रतिष्ठितः (बृ. ६-४-१७)' इत्यादिषु बहुसङ्ख्योपसङ्ग्रहेऽपि न विरोधः।**

**तस्यैवाकाशादिषु नानाभावात् तदतिरिक्तस्वरूपत्वाच्च॥ १२॥**

**पञ्च जनानाह—**

## ॥ ॐ प्राणादयो वाक्यशेषात् ॐ ॥ १३ ॥

**'प्राणस्य प्राणमुत चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो मनः (बृ. ६-४-१८)' इति वाक्यशेषात्॥ १३॥**

न हि भगवतोऽन्यस्य प्राणप्रणेतृत्वादिकं युज्यते। स्वाधेयत्वं तु लीलयेति भावः । नन्वन्नाभावात्पञ्चेतिनिर्देशः कण्वानां कथमित्यत आह **ज्योतिषेत्यादिना।**

## ॐ ज्योतिषैकेषामसत्यन्ने ॐ ॥ १४ ॥

**'तद्देवा ज्योतिषां ज्योतिः (बृ. ६-४-१६)'**

**इत्यनेन कण्वानां पञ्चकम्॥ १४॥**

*॥ इति नसङ्ख्योपसङ्ग्रहाधिकरणम् ॥ ३ ॥*

ननु भवतु भगवतः प्रकृत्यादिषु तत्तच्छब्दपरममुख्यार्थत्वं नानात्वं तदतिरिक्तत्वं च यद्यप्याकाशाद्वायुरित्याद्यवान्तरकारणत्वेनोच्यमानानि भूतानीत्येव । तेषामेव आत्मन आकाशः सम्भूत इति कार्यत्वेनोच्यमानत्वात् । स्वतन्त्रस्य कार्यत्वविरोधादितीमं पूर्वपक्षमपाकरोति **अवान्तरकारणत्वेत्यादिना।**

**अवान्तरकारणत्वेनापि स एवोच्यत इति वक्ति॥**

## ॥ ॐ कारणत्वेन चाकाशादिषु यथा-व्यपदिष्टोक्तेः ॐ ॥ १५ ॥

**आकाशादिष्ववान्तरकारणत्वेन स एव स्थितः। यथाव्यपदिष्टस्यैव परस्य 'य आकाशे तिष्ठन् (बृ. ५-७-१२)'**

**इत्यादिना आकाशादिषूक्तेः॥ १५॥**

यः प्रतिपुरुषं प्रकृति प्राणचक्षुः श्रोत्रान्नमनस्सु नानाभावेन तदतिरेकेण च तदाश्रयत्वेन स्थितः स एवाकाशादिष्ववान्तरकारणत्वेन उच्यमानः स्थितः स्वतः सम्पूर्णशब्दप्रवृत्तिनिमित्तनियामकत्वेन च यथा व्यपदिष्ठस्य व्यपदेश-मात्रपरममुख्यार्थत्वस्य परमात्मनो य आकाशे तिष्ठन्नित्यादिना आकाश-वाय्वादिभूततदभिमानिषु यः प्राणे तिष्ठन्नित्यादिना । अतः प्राणचक्षुरादिषु चोक्तेः अनुक्तावपि मुख्यार्थसम्भवे स एव ग्राह्यः । किमुक्ताविति भावः । सम्भूतत्वं तु भगवतः तत्तत्क्रियाप्रवर्तकत्वेन प्रादुर्भावादित्यनवद्यम् ।

*॥ इति कारणत्वेनाकाशाधिकरणम् ॥ ४ ॥*

अथैवं प्रायः पारंगते महासमन्वये त्रये सर्वाधिकरणसाधारणाः शङ्काः नैकाधिकरणे विशेषतः सङ्गताः ताः निराकरोत्यष्टभिः सूत्रैः । ननु भवतूक्तैर्विशेषहेतुभिः भगवत्यपि प्रवृत्तिः सर्वशब्दानां, न तु भगवत्येव । तेषामेव केषाञ्चिदर्थान्तरेष्वपि व्यवहारान्यथानुपपत्त्या तद्वाचकत्व-स्याप्यवगतेरित्याशङ्क्य व्यवहारस्य अन्यथैवोपपतिं सप्रमाणं दर्शयत्सूत्र-मुपन्यस्य व्याचष्टे **सर्वेत्यादिना**।

**सर्वशब्दानां परमात्मवाचकत्वे कथमन्यत्र व्यवहार इत्यतो ब्रवीति।**

## ॥ ॐ समाकर्षात् ॐ ॥ १६ ॥

**परमात्मवाचिनः शब्दा अन्यत्र समाकृष्य व्यवह्रियन्ते।**

**'परस्य वाचकाः शब्दाः समाकृष्येतरेष्वपि।**

न च परशब्दत्वविशेषण अग्न्यादिशब्दानां उदकादौ प्रयोगापत्तिरिति भावेनाह **लोकवेदानुसान्त इति।**

**व्यवह्रियन्ते सततं लोकवेदानुसान्तः' इति पाद्मे॥ १६॥**

ननु यदि परमात्मवचिनां शब्दानां समाङ्कर्षदिव जगति व्यवहारः। न तु तद्वाचकत्वं। तर्हि तेषां जगति प्रसिद्धिः न स्यात्। अन्यथानुपपत्त्या जगतोऽपि वाचकास्त इत्याशङ्क्याह **तर्हीति।**

**तर्हि कथं तेषां शब्दानां जगति प्रसिद्धिः—**

**॥ ॐ जगद्वाचित्वात्ॐ ॥ १७॥**

**जगति व्यवहारो लोकस्य। न तु परमात्मनि तथा। अतो जगति प्रसिद्धिः शब्दानाम्॥ १७॥**

यः सर्वस्यान्तर्नियामकः तत्तच्छब्दबद्धमुख्यार्थः। यतश्च समाकृष्टाः शब्दाः तस्य स्वव्यवहारागोचरत्वात्। तदनभिज्ञोऽयं जनः तत्तच्छब्दैर्जगद्वाचकैरपि स्वव्यवहारगोचरजगद्वक्ति। अतस्तेषां जगति प्रसिद्धिरित्यर्थः। ननु भवतु यदधीनमिदं सर्वं तत्रैव शब्दजातं मुख्यं तच्छब्दसमाकर्षश्चास्मिन्। ते तु पृथव्याद्यभिमानिजीवाः तन्मुख्यप्राणो वा। तदधीनत्वश्रुतेः अस्य सर्वत्येत्याशङ्क्य परिहन्तीत्याह **जीवेत्यादिना।**

**ॐ जीवमुख्यप्राणलिङ्गादिति चेत्तद्व्याख्यातम् ॐ ॥ १८ ॥**

**तदधीनत्वात्तच्छब्दवाच्यत्वमित्युक्तम्। तज्जीवमुख्यप्राणयोर्लिङ्गम्।**

**'अस्य यदैकां शाखां जीवो जहात्यथ सा शुष्यति (छां. ६-११-२)'**

**'वायुना हि सर्वे लोका नेनीयन्ते' इत्यादि श्रुतिभ्य इति चेन्न।**

**उपासात्रैविध्यादिति व्याख्यातत्वात्॥ १८॥**

य आत्मानमन्तरो यमयतीत्यादिश्रुतेः जीववायुशब्दौ तदन्तर्गत-भगवद्विषयाविति भावः । ननु जीवमोक्षार्थमेव सर्ववेदप्रवृत्तेः, तस्य च तदुक्तानन्तगुणवद्भगवत्सर्वोत्कर्षज्ञानादेव सिद्धेः किमर्थः तद्वाचकवेद-शब्दसमाकर्षः कर्मादिष्वित्याशङ्कां परिहरतीत्याह **अन्येत्यादिना**।

**ॐ अन्यार्थं तु जैमिनिः प्रश्नव्याख्याना-**
**भ्यामपि चैवमेके ॐ ॥ १९ ॥**

**परमात्मज्ञानार्थं कर्मादिकमपि वदतीति जैमिनिः।**

**'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति।**

**तस्मै स होवाच द्वे विद्ये वेदितव्ये (मुं. १-१३-४)''**

न वयं फलान्तराय मुक्तये वा ज्योतिष्टोमादिकर्मज्ञान-मादिशब्दात् अजशङ्करादिलोकेशज्ञानं च मत्वा भगवद्वाचकवेदशब्द-साकर्षं ब्रूमो येनोक्तदोषः स्यात् । किं तु परमार्थज्ञानार्थं कुतः विज्ञाय-मानमेव सर्वमिदं कर्मादिकं यस्मिन् विज्ञाते विज्ञातं भवति अन्यथा न स क इति । महाशालपदोक्तसर्वकर्मप्रवीणशौनकप्रश्नोत्तरत्वेन ऋगादिसर्व-वेदप्रतिपाद्य कर्मादिकं परमतः परमाक्षरे नारायणे विज्ञात एव ज्ञातं भवति। अत एव अपरमपि इदं वेदितव्यमित्यङ्गीकारो व्याख्यानात् । अनेन यदविज्ञाने विज्ञातमप्यविज्ञातं भवति । फलाभावादितिभावेनोक्तं यद्विज्ञानेशविज्ञातमपि विज्ञातं भवति। तत्फलावाप्तिरिति भावेनाह **कथं त्विति**।

**कथं भगवः स आदेशो भवतीति।**

**यथा सौम्यैकेन मृत्पिण्डेन (छां. ६-१-३-४)'**

**इत्यादि प्रश्नव्याख्यानाभ्याम्।**

सर्वान्वेदानधीतवानेव केवलं न तु तन्मुख्योद्देश्यं सकलकल्याणगुणकरं पृष्टवान्प्रायः । यतः स्तब्धोऽसि । यस्मिन् श्रुते मते विज्ञाते अन्यदश्रुतमस्तमविज्ञातमपि तदधीनत्वेन श्रुतं मतं विज्ञातं अतिनीचत्वेन विज्ञायमानं त्वदादिकमित्युक्तः श्वेतकेतुः पितरं पृच्छति । कर्मादिष्वपि वेदैकदेशैरुच्यमानेष्वासमन्तात्स एव सर्ववेदादेशो भवतीति कथं केन प्रकारेण जानीयामिति । तदुत्तरत्वेन यथा घटादिव्युत्पन्न मृदादिशब्दैः पुम्भिः दृश्यमान मृत्पिण्डादौ मृदादिशब्दार्थत्वेन विज्ञाते पुनर्घटादसर्वमृण्मयादि-मृत्पिण्डादिसदृशत्वेनेशविशेषेण ज्ञातं स्यात् । एवं जडजीवव्युत्पन्न-सच्चिदादिशब्दैः पुम्भिः ब्रह्मणि सच्चिदादिशब्दार्थत्वेन ज्ञाते पुनर्जडजीवात्मकं जगद्ब्रह्मात्यल्पसदृशत्वेन विशेषेण ज्ञायते । नत्वतिसदृशत्वेन । यतो यथा विज्ञाते तथा विशेषैः पुम्भिस्तदन्याधिकम् । तयोर्ज्ञातवद्भिः । विज्ञायमानसुवर्णामरभाषयोः तत्प्रधानत्वेन विज्ञायमानयोः सर्वं लोहमयं प्राकृतवाङ्मयं वाऽप्रधानत्वेन विशेषेण ज्ञातं स्यात् । एवं विज्ञात जडजीवैः पुम्भिः तेषु विचित्रानेकगुणान् ज्ञातवद्भिः विज्ञायमाने स्वतन्त्रशक्ति सकलकल्याणगुणाकरे ब्रह्मण्यतिप्रधानत्वेन विज्ञाते पुनरिदं जीवजडात्मकं विश्वं विज्ञातमविज्ञातं च केवलं तदायत्तत्वेन विशेषेण ज्ञायते । एवमुक्तप्रकारेण सोम्यमोहार्हलोकतोवेदतश्चविज्ञायमानस्यैव सर्वस्यापि तज्ज्ञानार्थत्वात् वेदैरादिश्यत इत्यादेशो भवतीत्यर्थः । एवं सर्वविज्ञानस्य एकविज्ञानहेतुत्वेऽपि एकविज्ञानेन सर्वं विशेषतो विज्ञायत इति अविरोधश्च । न केवलमेत-त्प्रश्नव्याख्यानार्थिकार्थोऽयं किन्तु साक्षादेव एके पठन्तीत्याह **अपि चेति** ।

**एवमपि चैके पठन्ति 'य स्तन्न वेद किमृचा करिष्यति**

**(ऋ. १-१६४-३९)' इति ॥ १९ ॥**

ब्रह्मयज्ञफलं महदुक्त्वोच्यते ऋच इत्यादि परमे व्योम्नि अव्याकृताकाशे । यद्वा परमे परेण नीयमाने शोभने च व्योम्नि विविधविद्याश्रये प्रकृतौ ब्रह्मादिहृदये

च यत्परमं देशतः कालतो गुणतः सर्वतः परमत्वेन नीयमानं शोभनं च मह प्रलयेप्यक्षयकल्याणगुणशक्तिक्रियादेहं अक्षयो भगवान्विष्णुः लक्ष्म्यावासोलये स्थितः । मुक्तेः सदा चिन्त्यमानो ब्रह्माद्यैः तान्तम्यगैरित्यादेः ततः उपलक्षणमेतत् । यद्रचोधीत इत्यादिप्रकृताः चत्वारो वेदाः ब्राह्मणेतिहासादिसहिताश्च तद्विषयाः । नन्वेषामपि देवानतत्सूक्तप्रतिपाद्यत्वात् कथमक्षरैकविषयाः सर्ववेदा इत्यत उच्यते । यस्मिन्निति । यस्मिन्नेभ्यः आधिक्येन निषण्णाः सर्वे देवाः अतन्ते यत्स्थावकवेदैरपि ईषत् श्रूयन्ते । न तु यन्निषण्णमात्रमानुषादिवत् यथा?.. नामाग्नावधिनिषण्णव्यां दहतीति प्रकाशत इति उच्यते। न तु तन्निषण्णमात्रम्। यतस्तद्विष्णवाख्यमक्षरदेहमिदमतो गुणतः सर्वाभ्याधिकमित्येवमपि न वेद किं त्वितरामरसाधारणं मन्यते। स तैः युक्तं कर्म कुर्वन्नपि न त्रैविध्यो भवतीति किं त्रिवेदादभिरधिगतैः ब्रह्मयज्ञादिरूपेणाधीतैश्च करिष्यति । न किमपि वेदोक्तफलं लभते । यस्त्वक्षरः विष्णवाख्यं स्वत एव अक्षन्देहमिदमतः सर्वोत्तममिति जानन्नपि सर्ववेदार्थभूतं तन्न वेद स तु त्रैविध्यो भवति । तथापि क्षयिष्णुफलत्वेन पुनः कर्तृत्वापरिहारात्। ब्रह्मयज्ञादिरूपऋगध्ययनादिकर्मभिरक्षसंख्यभगवदन्यार्थज्ञानेन किं करिष्यतीत्युच्यते। ये तु तेन ज्ञानेन तैः कर्मभिश्च इत्थमुक्तप्रकारेण तदक्षरं मन आद्यक्षरेषु रममाणं प्रलयेऽप्यक्षयशक्तिक्रियादेहं सर्ववेदार्थभूतं तं न वेदस त्रैविद्यो भवति । तथापि इमे प्रकृत देवादयः कर्तृत्व हित्वा सङ्कल्पमात्रसिद्धये यथेष्टभोगाय अक्षराख्य हरिणा सहोपविशन्ति सम्यगुपविशान्तीत्यर्थः ( एवं परमात्मन्येव परममुख्यया वृत्त्या स्वरवर्णपदात्मना सर्ववेदान्वयेप्यंशतः ततः समाकृष्य चिंत्प्रकृतिप्राकृतेषु मुख्यमात्रवृत्तौ साधितायां परमात्मनि मुख्यरूपेणाप्यन्वयो युज्यते वेदस्य। अन्यथा केवलैरर्थवाचिनः पदकदम्बकस्य अक्षरसमूहस्य वाक्यरूपेणाप्यन्वयो युज्यत इति भावेन उत्तरसूत्रार्थमाह **वाक्यान्वयादित्यादिना**। )

## ॥ ॐ वाक्यान्वयात् ॐ ॥ २० ॥

**वाक्यस्याप्येवमन्वयो युज्यते पृथक्पृथक्स्थितस्यापि परमात्मना ॥ २० ॥**

( ईळआयाहीत्यादीनां अर्थान्तरत्वेऽपि अग्निवाय्वादिशब्दानां यदा भगवद्वाचित्वं तदा अग्निमीळे वायवायाहीत्यादिवाक्यपृथक्स्थितान्येव । यदा त्वग्निवाय्वादिवाचित्वं तदा पृथक् स्थितानीत्यर्थः । ) ननु कथं कर्मदेवतादिवचनस्य परमात्मार्थता । येन येन पृथक्स्थितानामपि वाक्यानां परमात्मनान्वय इत्याकाङ्क्षायाः त्रिधोत्तरं शिष्यत्रयमतेन दर्शयतीत्याह **प्रतिज्ञेत्यादिना** । )

## ॥ ॐ प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॐ ॥ २१ ॥

**'नान्यः पन्था अयनाय विद्यते (तै. आ ३-१२-७)' इति प्रतिज्ञासिद्धेर्लिङ्गत्वेन कर्मादिकमुच्यते इत्याश्मरथ्यः । यस्मादेवमनित्यफलमन्यत्तस्मान्नान्यः पन्था इति ॥ २१ ॥**

( यद्यमृतत्वावाप्तये परमपुरुषज्ञानतोऽन्यः पन्था न विद्यत इति प्रतिज्ञा सिध्येत् तर्हि तज्ज्ञानाय प्रयतेत पुमान् । अतस्तत्सिध्यर्थं लिङ्गत्वेन मायामहदादिशब्दैः श्रीब्रह्मादिशब्दैश्च वेदतन्त्रोक्तमार्गतो रमा अजशङ्करादिलोकेशादीन् यजन्तो विजानन्तश्च पुत्रवित्ताद्यैहिकं पातालाद्यामुष्मिकं च अनित्यमेव फलं लभन्त इति कर्मदेवतादिकमुच्यत इति आश्वरथ्यो मन्यत इत्यर्थः । ( एवं तर्हि मुमुक्षुणानुष्ठेयं कर्म न विज्ञातव्यं भगवतोऽन्यदित्यत आह **उत्क्रमिष्यत इत्यादिना** । )

## ॥ ॐ उत्क्रमिष्यत एवं भावादित्यौडुलोमिः ॐ ॥ २२ ॥

**उत्क्रमिष्यतो मुमुक्षोः कर्मादिना भाव्यं साधनसाधनत्वेन अतस्तद्वक्तीत्यौडुलोमिर्मन्यते ॥ २२ ॥**

(न केवलमधिकारिणां ब्रह्मज्ञानप्रवृत्तये तदपेक्षया अत्यल्पफलत्वेन अतिनीचत्वेन कर्म तदाराध्यादि रमाशङ्काद्युच्यते । नापि केवलान्तः-करणशुद्धिद्वारा तत् ज्ञानोपपत्तये च किन्तु सर्वस्य यथायोग्यं ब्रह्मण उत्पत्तिस्थितिसंहारनियमनज्ञानाज्ञानबन्धमोक्षवत्वेन ? तच्छक्त्यंशावस्थित-त्वेन सर्वाश्रयत्वेन ब्रह्मविज्ञानार्थं चेति भावेनाह **अवस्थितेरित्यादिना** ।)

## ॥ ॐ अवस्थितेरिति काशकृत्स्नः ॐ ॥ २३ ॥

**सर्वं परमात्मन्यवस्थितमिति वक्तुं तद्वचनमिति काशकृत्स्नः ।**

न चैवं ऋषीणां परस्परं विरोध इत्याह **कृष्णद्वैपायनेति** ।

**कृष्णद्वैपायनमतादेकदेशविदः परे ।**

**वदन्ति ते यथाप्रज्ञं न विरोधः कथञ्चन' इति पाद्मे ॥ २३ ॥**

*॥ इति समाकर्षाधिकरणम् ॥ ५ ॥*

(ननु परमपुरुषे स्त्रीवाचकशब्दासम्भवात् । न ततः समाकर्षः स्त्रीषु तेषां किन्तु तास्वेव मुख्यास्ते इति पूर्वपक्षं प्रतिक्षिपतीत्याह **स्त्रीत्यादिना** । )

**स्त्रीशब्दा अपि तस्मिन्नेवेत्याह—**

## ॥ ॐ प्रकृतिश्च प्रतिज्ञा दृष्टान्तानुपरोधात् ॐ ॥ २४ ॥

**'हन्तैतमेव पुरुषं सर्वाणि नामान्यभिवदन्ति यथा नद्यस्स्यन्दमानाः समुद्रायणाः समुद्रमभिविशन्त्येवमेवैतानि नामानि सर्वाणि पुरुष-मभिविशन्ति'**

**इति प्रतिज्ञादृष्टान्तानुपरोधात्प्रकृतिशब्दवाच्योऽपि स एव ॥ २४ ॥**

(प्रकृतं परमपुरुषमेव सर्वाणि नामानि सर्वतो मुख्यतश्च वदन्तीति प्रतिज्ञाय नदीवन्मध्ये स्थिरचरव्यवहारान् घटयन्त्यपि परमपुरुषैकायनस्वप्रवृत्तिनिमित्त-

धर्मण्यतः तमेव सर्वतो मुख्यतश्च वदन्तीति दृष्टान्ताभिधानात् । प्रकृतिशब्दमुख्यार्थोऽपि स एव । एवं सति तयोरनुपरोधात् । अन्यथोपरोधादित्यर्थः ।)

( प्रकृतिशब्देन मायाभिधानात् । मायाशब्देन तदिच्छाभिधानात् स एव प्रकृतिशब्दार्थ इत्याह **अभिध्येत्यादिना** ।

**॥ ॐ अभिध्योपदेशाच्च ॐ ॥ २५ ॥**

**'मायां तु प्रकृतिं विद्धिमायिनं तु महेश्वरम् (श्वे. ४-१०)' ।**

**महामायेत्यविद्येति नियतिर्मोहिनीति च ।**
**प्रकृतिर्वासनेत्येवं तवेच्छाऽनन्त कथ्यते' ॥**

**इति वचनात्तदभिध्यैव प्रकृतिशब्देनोच्यते ।**

तदिच्छाभिधाने तस्य किमायातमित्यत आह **सोऽभिध्येति** । )

**'सोऽभिध्या स जूतिः स प्रज्ञा स आनन्दः'**

**न चैतदत्र विरुद्धं ऐश्वर्ययोगादित्याह ध्यायतीति ।**

**'ध्यायति ध्यानरूपोऽसौ सुखी सुखमतीव च ।**
**परमैश्वर्ययोगेन विरुद्धार्थतयेष्यते' इति ब्रह्माण्डे ॥ २५ ॥**

(न च केवलमिच्छाद्वारैव प्रकृतित्वमाहागमो भगवतः किं तर्हीत्यत आह **साक्षाच्चेति** ।

**ॐ साक्षाच्चोभयाम्नानात् ॐ ॥ २६ ॥**

**'एष स्त्र्येष पुरुष एष प्रकृतिरेष आत्मैष ब्रह्मैष लोक एष आलोको योऽसौ हरिरादिरनादिरनन्तोऽन्तः परमः पराद्धिश्वरूपः'**

**इति पैङ्गिश्रुतौ साक्षादेव प्रकृतिपुरुषत्वाम्नानात् ॥ २६ ॥**

स्त्रियादौ विश्वस्मिन् रूपाण्यस्येति स्त्रियादेः विश्वस्य रूपमिव रूपमसस्येति वा विश्वरूपः।

एवं प्रवृत्तिशब्दस्य प्रयोगबाहुल्यं दर्शयित्वा महायोगं च तत्र दर्शयतीत्याह **आत्मकृतेरित्यादिना**।

## ॐ आत्मकृतेः परिणामात् ॐ ॥ २७ ॥

**प्रकर्षेण करोतीति प्रकृतिरिरिति योगाच्च। प्रकृतावनुप्रविश्य तां परिणाम्य तत्परिणामेषु स्थित्वा आत्मनो बहुधा करणात्।**

**'अथ हैष आत्मा प्रकृतिमनुप्रविश्याऽत्मानं बहुधा चकार। तस्मात्प्रकृतिः तस्मात्प्रकृतिरित्याचक्षते' इति भाल्लवेयश्रुतिः।**

**'अविकारोऽपि परमः प्रकृतिं तु विकारिणीम्। अनुप्रविश्य गोविन्दः प्रकृतिश्चाभिधीयते' इति नारदीये।**

प्रकृतावनुप्रविश्यतां महदादिबहुविकारिर्णी कुर्वन् कृत्वा अर्थैष्व-विकारेणैवात्मानं प्रकर्षेण बहुधा च कारयन् तस्मात्स प्रकृतिः तस्मात्तं प्रकृतिरित्याचक्षत इति पुनः विद्वद्रूढिरपि तत्र दर्शिता। अनेनाभिध्योपदेशादितीच्छयैव कांश्चित्प्रकर्षेण करोतीति सूचितम्। साक्षाच्चेतीच्छापूर्वकं स्वदेहादिरपि कांश्चित्। एवमविकारमेव ब्रह्म स्वेच्छया स्वयं जगत्करोतीति श्रुतिरुक्ता। यत्तदेव परिणमते विश्वात्मना मृषा वा प्रतीयत इति कल्पनं तदयुक्तमित्याह **न चेति**।

**न चान्यत्कल्प्यम्। अप्रामाणिकत्वात्॥ २७॥**

प्रपञ्चितं चैतदनुव्याख्याने भाष्यकारैरेव। न केवलं रमावाण्यादि-स्त्रीस्थत्वात् तदाकारत्वाद्वा तत्तन्नामनिरुक्तेर्वा स्त्रीशब्दवाच्यः। किं तर्हीत्यत आह **योनिश्चेत्यादिना**।

## ॥ ॐ योनिश्च हि गीयते ॐ ॥ २८ ॥

अव्यवधानेनोत्पत्तिद्वारत्वं च प्रकृतित्वम्।

तच्चास्यैव हि गीयते 'यद्भूतयोनिं परिपश्यन्ति धीराः (मुं. १-१-६)' इति।

'व्यवधानेन सूतिस्तु पुंस्त्वं विद्वद्भिरुच्यते।
सूतिरव्यवधानेन प्रकृतित्वमिति स्थितिः॥

उभयात्मकसूतित्वाद्वासुदेवः परः पुमान्।
प्रकृतिः पुरुषश्चेति शब्दैरेकोऽभिधीयते' इति ब्रह्माण्डे॥ २८॥

*॥ इति प्रकृत्यधिकरणम् ॥ ६ ॥*

भूतानामाकाशादीनां ब्रह्मादीनां च केषांचित् स्व्यव्यवधानेन उत्पादनात् भूतयोनिरित्यर्थः। ननु युक्तं परात्परमस्य पुरुषस्यापि प्रकृत्यादिविश्वगतस्य तद्भिन्नस्यापि तदाकारत्वादिहेतुना तत्तन्नाममुख्यार्थत्वं तथा शून्यादिशब्दार्थत्वं न सच्चिदानन्दाद्याकारस्येतीमं पूर्वपक्षमपाकरोतीत्याह **एतेनेत्यादिना**।

## ॥ ॐ एतेन सर्वे व्याख्याता व्याख्याताः ॐ ॥ २९ ॥

एतेन सर्वे शून्यादिशब्दा अपि व्याख्याताः।

'एष ह्येव शून्य एष ह्येव तुच्छ एष ह्येवाभाव एष ह्येवाव्यक्तोऽदृश्योऽचिन्त्योनिर्गुणश्च' इति महोपनिषदि।

'शमूनं कुरुते विष्णुरदृश्यस्सन् परः स्वयम्।
तस्माच्छून्य इति प्रोक्तस्तोदनात्तुच्छ उच्यते॥

नैष भावयितुं योग्यः केनचित्पुरुषोत्तमः।
अतोऽभावं वदन्त्येनं नाशयत्वान्नाश इत्यपि॥

**सर्वस्य तदधीनत्वात्तत्तच्छब्दाभिधेयता।**
**अन्येषां व्यवहारार्थमिष्यते व्यवहर्तृभिः' ।। इति महाकौर्मे ।।**

**एतेन तदधीनत्वाद्युक्तयुक्तिसमुदायेन।**

( एतेन तदधीनत्वाद्युक्तिसमुदायेन एष ह्येवेति महोपनिषदि श्रूयमाण-शून्यादिशब्दाः शमूनमित्यादिना महाकौर्मे व्याख्याताः । यथाभीष्टवस्तु नष्टमदृश्यं वा तद्वतः शमूनं करोति तुदते च तं शमनुभवन्तम् )न च तद्भावयितुं योग्यं सुखायनापि तेनोपभोग्यम् । भगवांस्तु सर्वदा सर्वत्र सर्वोत्तमत्वेन सन्नेव दुर्जनादृश्य एव नच्छमूनं करोतीति तुदते च तं भवितुमयोग्यश्च नैतेनानुभोग्यश्च ।यथा रमा अजशङ्करादिभिः इतरत्रापीष्टग तदप यन् स्वयमेव सर्वं करोति । एवं सर्वस्य शब्दप्रवृत्तिनिमित्तस्य स्वगतस्य परगतस्य वा तदधीनत्वात् तस्यैव शून्यतुच्छाभावानाशादिशब्दानां परममुख्यार्थता । अन्येषां तदधीनेषत्प्रवृत्ति-निमित्तवत्वेन व्यवहारार्थं तत्तच्छब्दार्थतेष्यत इत्यर्थः । सूत्राल्पाक्षरत्वविरोधिनी द्विरुक्तिः किमर्थ्येत्यत आह **अवधारणार्थमिति**।

**'अवधारणार्थं सर्वस्याप्युक्तस्याध्यायमूलतः।**
**द्विरुक्तिं कुर्वते प्राज्ञा अध्यायान्ते विनिर्णये'।।**

**इति वाराहसंहितायाम्।। २९ ।।**

**एतेन सर्वे व्याख्याताधिकरणम्।।**

*इति श्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रभाष्ये श्रीमदानन्दतीर्थभगवत्पादाचार्य, विरचिते प्रथमाध्यायस्य चतुर्थः पादः ।। १ ।। ४ ।।*

द्विरुक्तिरवधारणाय, विनिर्णयाय। श्रीप्रभंजनवन्ददिग्विजयरामार्पणमस्तु।

इति सत्तर्कदीपावल्यां प्रथमाध्यायः समाप्तः ।

*।। समन्वयाध्यायस्समाप्तः ।। १ ।।*

****

## ॥ अथ द्वितीयोऽध्यायः ॥

# ॥ अविरोधाध्यायः ॥

### प्रथमः पादः

॥ हरिः ॐ ॥

उक्तेऽर्थेऽविरोधं दर्शयत्येनेनाध्यायेन।

प्रथमपादे युक्त्यविरोधम्।

प्रथमतः स्मृत्यविरोधं दर्शयति—

**॥ ॐ स्मृत्यनवकाश दोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॐ ॥ १ ॥**

**सर्वज्ञा हि रुद्रादयः। अतस्तेषां वचनविरोधेऽप्रामाण्यमेव स्यादिति चेन्न। अन्यस्मृतीनां विष्णवादिभिर्नितरां सर्वज्ञैरेव कृतत्वाच्छ्रुतेराधिक्यं च सिध्यति॥ १॥**

क्वचिदर्थे प्रत्यक्षसंवादिपशुपतिवाक्यदृष्टान्तेन पशुपतिर्जगत्कारणमित्यागमोपि प्रमाणम् पशुपतिवाक्यत्वादित्येतदनुमानुकूलत्वेन तदागमस्यापि प्रामाण्यं किं न स्यादिति न वाच्यम्। प्रत्यक्षविसंवादिपशुपतिवाक्यदृष्टान्तेन पाशुपतागमाप्रामाण्यस्यापि अनुमातुं शक्यत्वात्। तदाह **इतरेषामित्यादिना।**

**॥ ॐ इतरेषां चानुपलब्धेः ॐ ॥ २ ॥**

**इतरेषां च तासु स्मृतिषूक्तानां फलानां प्रत्यक्षतोऽनुपलब्धेः अप्रामाण्यं तासां युक्तम्। च शब्देन भागोपलब्धिरङ्गीकृता॥ २॥**

## ॥ ॐ एतेनयोगः प्रत्युक्तः ॐ ॥ ३ ॥

**योगफलं प्रत्यक्षोपलभ्यत इति न मन्तव्यम्। उक्ताभ्यासे तत्काल एव फलादृष्टेः॥ ३॥**

*॥ स्मृत्यधिकरणम् ॥ १ ॥*

श्रुतिस्मृतिविहितैहिककर्मणोनुऽष्ठानेऽपि क्वचित्फलाभावदर्शनात्। अन्यागमवच्छ्रुत्यादेरप्रामाण्यं किं न स्यादिति न वाच्यम्। वाचाविरूप-नित्ययेत्यादिप्रमाणसिद्धत्वेन वेदानां नित्यत्वान्निर्दोषत्वेन तत्प्रामाण्य-स्यापरिहार्यत्वाद्वेदमूलत्वेन पञ्चरात्रादेरपि प्रामाण्यसिद्धेः। यद्वेदाद्युक्तस्यैहिक-काम्यकर्मणोऽनुष्ठानेऽपि फलादर्शनं तत्कर्तृवैगुण्यात् प्रतिबन्धककर्मवशाद्वेति मन्तव्यम्।

पशुपत्यादिकृतागमस्य तु विप्रलम्भादिर्कृदोषसम्भवेनापि यथोक्त-फलादर्शनोपपत्तेः। सप्रतिबन्धककर्मादिनेवेति निश्चेतुं शक्यत्वात्। तदाह न **विलक्षणत्वादित्यादिना**।

## ॥ ॐ न विलक्षणत्वादस्य तथात्वं च शब्दात् ॐ ॥ ४ ॥

**नैवं श्रुतेस्तदनुसारिस्मृतेश्च तदुक्तानुपलब्धेरप्रामाण्यम्। विलक्षणत्वान्नित्यत्वात् तदनुसारित्वाच्च। न हि नित्ये दोषाः कल्प्याः।**

ननु जगज्जन्मादिकारणे नारायणे नित्यस्यापि निखिलवेदस्य प्रामाण्यं न युज्यते। प्रमाणान्तरसंवादाभावादित्यत आह **स्वतश्चेत्यादिना**।

**स्वतश्च प्रामाण्यम्। अन्यथाऽनवस्थितेः।**

**'न चक्षुर्न श्रोत्रं न तर्को न स्मृतिर्वेदा ह्येवैनं वेदयन्ति' इति भाल्लवेयश्रुतेश्च।**

**नित्यत्वं च शब्दादेव प्रतीयते।**

**'वाचा विरूप नित्यया (ऋ. ८-६४-६)' इत्यादेः।**

**'अनादिनिधना नित्या' इति च स्मृतिः॥ ४॥**

प्रमाणस्य प्रमाणान्तरसंवादेनैव प्रामाण्ये संवादकप्रामाण्यस्यापि प्रमाणान्तरसंवादेनैव प्रामाण्यम् । तस्यापि प्रमाणान्तरसंवादेनैव प्रामाण्यमित्यनवस्था स्यात् । अतः प्रामाण्यं स्वत एवेत्यङ्गीकर्तव्यमित्यर्थः संवादनिरपेक्षाणामेव वेदानां विष्णुबोधकत्वं श्रुत्या साधयति । न चक्षुरिति । अधिकारसम्पत्तौ दृष्टार्थस्य कर्मणो वैदिकस्य फलदर्शनात् । क्वचित् फलादर्शनं प्रतिबन्धककर्मनिबन्धनमेव । नान्यथा । ऋग्यजुस्सामादीनां स्वत एव प्रामाण्यनियमः । यत्र तु तदनुसारित्वं तत्र अन्यागमानामपि प्रामाण्यात् । क्वचित्तदुक्तैहिककर्मफलदर्शनं युज्यते । तदाह **दृश्यत इत्यादिना**।

## ॥ ॐ दृश्यते तु ॐ ॥ ५ ॥

अधिकारिणां फलम् । भविष्यत्पुराणे च—

**'ऋग्यजुः सामाथर्वाश्च मूलरामायणं तथा।**
**भारतं पञ्चरात्रं च वेदा इत्येव शब्दिताः॥**

**पुराणानि च यानीह वैष्णवानि विदो विदुः। स्वतः**
**प्रामाण्यमेतेषां नात्र किञ्चिद्विचार्यते॥**

**यद्येषूक्तं न दृश्येत पूर्वकर्मात्र कारणम्।**
**नाप्रामाण्यं भवेदेषां दृश्यते ह्यधिकान्ततः॥**

**इतः प्रामाण्यमन्येषां न स्वतस्तु कथञ्चन। अदृश्योक्तौ**
**ततस्तेषामप्रामाण्यं न संशयः' इति॥ ५॥**

*॥ इति श्रुतिनित्यत्वाधिकरणम् ॥ २ ॥*

'मृदब्रवीत् (श. ब्रा. ६-१-३)'

'आपोऽब्रुवन् (श. ब्रा. ६-१-३)'

इत्यादि वचनाद्युक्तिविरुद्धो वेद इत्यतोऽब्रवीत्—

## ॥ ॐ अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॐ ॥ ६ ॥

यन्मृदादिकं तन्न ब्रवीतीति युक्त्या विरुद्धत्वात् मृदब्रवीदित्यादि-वेदैकदेशस्य अप्रामाण्यात् । तद्वज्जगत्कर्तृप्रतिपादकस्य वेदस्य नाप्रामाण्यं शङ्कनीयम् । मृदादिशब्दानां पृथिव्याद्यनुगतवक्तृत्वादि विशेषशक्तियुक्त-तत्तद्देवतावाचित्वेनाविरुद्धत्वात् । **न तदाह मृदित्यादिना** ।

**मृदाद्यभिमानिदेवता तत्र व्यपदिश्यते । तासां चेतरेभ्यो विशिष्टं सामर्थ्यमनुगतिश्च सर्वत्र । अतस्तासां सर्वमुक्तं युज्यते ॥ ६ ॥**

## ॐ दृश्यते च ॐ ॥ ७ ॥

**तासां सामर्थ्यं महद्भिः । भविष्यत्पुराणे च—**

तदेतत्प्रमाणवचनेन दृढयति **पृथिव्याद्यभिमानिन इत्यादिना** ।

**'पृथिव्याद्यभिमानिन्यो देवताः प्रथितौजसः ।**
**अचिन्त्याः शक्तयस्तासां दृश्यन्ते मुनिभिश्च ताः ।**
**ताश्च सर्वगता नित्यं वासुदेवैकसंश्रयाः' इति ॥ ७ ॥**

*॥ इति अभिमान्यधिकरणम् ॥ ३ ॥*

असदेवेदमग्र आसीत् असतः सदजायतेत्यादिना असतो जगत्कारणत्वश्रुतेः न ब्रह्मजगत्कारणमिति नाशङ्कनीयम् । न विद्यते सदुत्तमं यस्मात् तस्मादसदित्यसच्छब्दवाच्यस्य पुरुषोत्तमस्यावश्याङ्गीकर्तव्यत्वेना-विरोधात् । अत्यन्तासतो जगत्कारणत्वासम्भवात् । उपरितनपादगतेन नासतो

दृष्टत्वादित्यनेन गतार्थमिदमिति नाशङ्कनीयम् । असतः सदजायतेत्यादि-वाक्यस्य जगत्कर्तृपुरुषोत्तमपरत्वेन युक्तिविरुद्धार्थत्वमित्यत्र प्रतिपादनात् । उपरि युक्तिभिः शून्यवादस्य निराकरिष्यमाणत्वेनापौनरुक्त्यात् । एतेन सर्वे व्याख्याता इत्यत्रासदादिशब्दैर्मुख्यतः परमात्मोच्यत इति प्रतिपादितत्वेऽपि तेषाममुख्यवाच्यत्वस्याप्यङ्गीकृतत्वात् । असतः सदजायत इत्यनेन असत्कारणत्वं विश्वस्याशङ्क्य असदिति चेन्न । प्रतिषेधमात्रत्वादिति परिहृतमित्यदोषः । असतः कारणत्वादिकं वक्तीत्यसतः कारणत्वाद्युक्तिविरुद्धं वेदवाक्यमित्येतदत्र निषिध्यत इत्यर्थः । तदेतदाह **असदेवेदमग्र आसीदित्यानिना।**

**'असदेवेदमग्र आसीत् (छां. ६-२-१)'**

**'असतः सदजायत (छां. ६-२-१)'**

**इत्यादिनाऽसतः कारणत्वोक्तेर्विरोध इत्यतो वक्ति—**

## ॥ ॐ असदिति चेन्न प्रतिषेधमात्रत्वात् ॐ ॥ ८ ॥

**प्रतिषेधमात्रत्वान्नासतः कारणत्वं युक्तम् । असतः कारण-त्वाद्युक्तिविरुद्धं वेदवाक्यमित्येतदत्र निषिध्यते । सर्वशब्दानां ब्रह्मणि समन्वयेऽपि 'तदधीनत्वादर्थवत्' इत्यादिना अमुख्यत्वेनान्यस्यापि वाच्यत्वेन अङ्गीकारादसतः प्राप्तिः । तथा च श्रुतिप्राप्तमेवासन्मतमत्र निषिध्यते । समयस्योपरि निषेधात् । अर्थाद्युक्तिविरोधापि निराक्रियते॥ ८॥**

युक्त्यन्तरुरुक्तार्थं समर्थयते **अपीतावित्यादिना।**

॥ ॐ अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॐ ॥ ९ ॥

असत उत्पत्तौ प्रलयेऽपि सर्वासत्वमेव स्यात्॥ ९॥

॥ ॐ न तु दृष्टान्तभावात् ॐ ॥ १० ॥

प्रलये सर्वासत्वं भावे दृष्टान्तभावादेव न युज्यते। सत उत्पत्तिः सशेषविनाशश्च हि लोके दृष्टः॥ १०॥

ॐ स्वपक्षदोषाच्च ॐ ॥ ११ ॥

दृष्टान्ताभावादेव॥ ११॥

॥ ॐ तर्काप्रतिष्ठानादन्यथानुमेयमिति चेदेव-
मप्यनिर्मोक्ष प्रसङ्गः ॐ ॥ १२ ॥

एतावानेव तर्क इति प्रतिष्ठापकप्रमाणाभावात् उक्तादन्यथाऽप्यनुमेयमिति चेन्न, एवं सति प्रमाणसिद्धेऽपि मोक्षे अन्यथाऽनुमेयत्वादनिर्मोक्षप्रसङ्गः। अतो यावत्प्रमाणसिद्धं तावदेवाङ्गीकर्तव्यम्। नातोऽन्यच्छङ्क्यम्।

'यावदेव प्रमाणेन सिद्धं तावदहापयन्।
स्वीकुर्यान्नैव चान्यत्र शङ्क्यं मानमृते क्वचित्'

इति वामने॥ १२॥

दृष्टान्तसद्भावात् जगतः सकर्तृकत्वपक्ष एव ज्यायान् नत्वसत्कारणत्वपक्षः दृष्टान्रहितत्वादित्यर्थः। एतेनैव न्यायेन जगतोऽकर्तृकत्वाचेतनकर्तृकत्वपक्षा निराकृता भवन्ति। भगवत्कर्तृकत्ववादिनं प्रत्यकर्तृकत्वेजीवे नाप्रेन्तिेन जडेन वा कृतत्वे दृष्टान्तस्याभिधातुमशक्यत्वात्। ईश्वरकर्तृकत्वे दृष्टान्तसद्भावाच्च। तदाह **एतेनेत्यादिना**।

**ॐ एतेन शिष्टा अपरिग्रहा अपि व्याख्याताः ॐ ॥ १३ ॥**

**एतेन दृष्टान्तभावेनाभावेन चावशिष्टा अप्यपरिग्रहा विरुद्धसिद्धान्ता अकर्तृकत्वाचेतनकर्तृकत्व जीवकतृकत्वादयोऽपि।**

**'अकस्माद्धीदमाविरासीत् अकस्मात्तिष्ठति अकस्माल्लयमभ्युपैति' 'प्रधानादिदमुत्पन्नं प्रधानमधितिष्ठति।**

**प्रधाने लयमभ्येति न ह्यन्यत्कारणं मतम्'।**

**'जीवाद्भवन्ति भूतानि जीवे तिष्ठन्त्यचञ्चलाः।**

**जीवे तु लयमृच्छन्ति न जीवात्कारणं परम्'**

**इत्यादि श्रुतिप्राप्ता निराकृताः। यथा दुःखादिषु जीवस्यास्वतन्त्र्यत्वमेवमन्येष्वपीति दृष्टान्तः।**

अकस्माद्धीदमाविरासीदित्यादिश्रुतिगतिमाह **श्रुतिगतिरित्यादिना।**

**श्रुतिगतिस्तु ब्रह्मवाचकत्वेन प्रदर्शिता। यत्रान्य वाचकत्वेऽप्यविरोधस्तत्रान्यदप्य मुख्यतयोच्यते। यत्र विरोधस्तत्र ब्रह्मैवोच्यत इति नियमः॥ १३॥ (असदधिकरणम्॥ ४॥)**

यज्जगज्जन्मादिकर्तृत्वमुक्तं विष्णोः तन्न युज्यते। तस्य जीवाभिन्नस्य जीववज्जगत्कर्तृत्वायोगात्। परेव्यये सर्व एकीभवन्तीतिश्रुत्यन्यथानुपपत्त्या जीवेशाभेदसिद्धिरिति न वाच्यम्। एकीभवन्तीति श्रुतेर्नीरेण क्षीरमेकी-भवतीतिवत् संसर्गविषयत्वेन जीवविष्णोरभेदासम्भवात्। न च नीरक्षीरयोरभेद एव। हंसेन पृथक्क्रियमाणत्वात् नीरप्रक्षेपे क्षीरस्य परिमाणाधिक्य-दर्शनाच्चेत्येतमर्थं विस्तृत्य दर्शयति **भोक्त्रापत्तेरित्यादिना।**

॥ ॐ भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॐ ॥ १४ ॥

'कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति'

इति मुक्तजीवस्य परापत्तिरुच्यते। अतस्तयोरविभागः। अतः पूर्वमपि स एव। न ह्यन्यस्यान्यत्वं युज्यत इति चेन्न। स्याल्लोकवत्। यथा लोके उदके उदकान्तरस्य एकीभावव्यवहारेऽप्यन्तर्भेदोऽस्त्येव एवं स्यादत्रापि। तथा च श्रुतिः

'यथोदके शुद्धे शुद्धमासिक्तं तादृगेव भवति (कठ. ४-१५)' इति।

स्कान्दे च—

'उदकं तूदके सिक्तं मिश्रमेव यथा भवेत्।
न चैतदेव भवति यतो वृद्धिः प्रदृश्यते॥

एवमेव हि जीवोऽपि तादात्म्यं परमात्मना।
प्राप्तोऽपि नासौ भवति स्वातन्त्र्यादिविशेषणात्' इति।

'ब्रह्मेशानादिभिर्देवैर्यत्प्राप्तुं नैव शक्यते।
तद्यत्स्वभावः कैवल्यं स भवान् केवलो हरे' इति च।

'न ते महित्वमन्वश्नुवन्ति (ऋ. ७-९९-२)' न ते विष्णो जायमानो न जातो देवमह्निः परमात्माप इत्यादि च।

फलत्वेऽपि युक्तिविरोधेऽन्तर्भावादत्रोक्तम्॥ १४॥

॥ भोक्त्रधिकरणम्॥ ५॥

साधननिरपेक्षमेव जगज्जन्मादिकर्तृत्वमभिप्रेतं यद्विष्णोस्तद्युक्तिविरुद्धमित्याक्षिप्य समर्थयति **तदनन्यत्वमित्यादिना**।

॥ ॐ तदनन्यत्वमारम्भणशब्दादिभ्यः ॐ ॥ १५ ॥

स्वतन्त्रबहुसाधना सृष्टिर्लोके दृष्टा। नैवं ब्रह्मणः। स्वरूपसामर्थ्यादिव तस्य सृष्टिः।

यदुक्तं कुलालादेः साधनसापेक्षं कर्तृत्वं असमर्थत्वाद्विष्णुत्वचिन्त्यशक्तित्वात्साधननिरपेक्षोऽपि विश्वं सृजति इत्यत्र श्रुतिमुदाहरति **किंस्विदिति।**

**'किं स्विदासीदधिष्ठानमारम्भणं कतमस्त्स्वित्कथाऽऽसीत्'**

**(ऋ. १०-८१-२) इति ह्याक्षेपः।**

**अधिष्ठानाद्यनुक्तेः। आदिशब्दाद्युक्तिभिश्च।**

आरभ्यते येन तदारम्भणं यतो येन कारणादिना भूमिं जनयन्विश्वकर्मा विश्वद्रष्टा द्यां च निर्मितवान् महिना माहात्म्येन तदधिष्ठानमारम्भणं च किमासीत् । पार्थिवाप्यतैजसावयविअवयवानां प्रलयात्किमासीत्कतमदासीत्कथमासीन्न किमपि न कतमदपि न कथमप्यासीदित्याक्षेपार्थः । किं शब्दोऽत्र न तु प्रश्नार्थः। वाक्यशेषे अधिष्ठानादेरुत्तरत्वेनाश्रवणात्। द्यावाभूमी जनयन् देव एक इति श्रवणाद्विश्वकर्ता विष्णुरेक एव आसीदित्यर्थः । सूत्रगतादिशब्दोपात्तास्तिस्रो युक्तीर्दर्शयति **पन्तन्त्र इति।**

**'पन्तन्त्रो ह्यपेक्षेत स्वतन्त्रः किमपेक्षते। साधनानां साधनत्वं यतः किं तस्य साधनैः' इत्यादिभिः॥ १५॥**

परतन्त्रत्वाभावात्स्वतन्त्रत्वात्साधनसाधनत्वस्य तदधीनत्वान्न विष्णुः साधनापेक्षीत्यर्थः श्रुत्यन्तरैरप्यनुपलम्भान्न विष्णोरप्यपेक्षणीयं साधनमस्तीत्याह **भावे चेत्यादिना।**

## ॥ ॐ भावे चोपलब्धेः ॐ ॥ १६ ॥

**स्वतन्त्रसाधनभावे प्रमाणैरुपलभ्येत।**

**'अनुक्तं पञ्चभिर्वेदैर्न वस्त्वस्ति कुतश्चन।**
**अतो वेदत्वमेतेषां यतस्ते सर्ववेदकाः' इति स्कान्दे॥ १६॥**

यद्यपि साधनैर्विनाऽपि जगत्स्रष्टुं शक्नोति परमेश्वरः । तथाऽपि तेषां साधनत्वं सम्पाद्य लीलया तैः सृजतीत्येतत्प्रतिपादयन्नाह **अद्भ्य इत्यादिना** ।

**'अद्भ्यः सम्भूतः पृथिव्यै रसाच्च विश्वकर्मणः समवर्तताधि (तै. आ. ३-१३)' इत्यादिना साधनान्तरप्रतीतेः कथमनुपलब्धिरित्यत आह—**

**॥ ॐ सत्वाच्चावरस्य ॐ ॥ १७ ॥**

**अवरस्य तदधीनस्य साधनस्य सत्वात् ।**

पृथिव्यै पृथिव्या इत्यर्थः । अबादिभिर्हिरण्यगर्भविग्रहो ब्रह्माण्डरूपः सम्भूत इत्यर्थः । महाप्रलयेऽपि पन्तन्त्रसाधनसद्भावे श्रुतिमुदाहरति **काल आसीदिति** ।

**'काल आसीत्पुरुष आसीत्परम आसीत्तद्यदासीत्तदधीनमासीत्तदावृतमासीदथ ह्येक एव परम आसद्धयस्यैतदासीन्न ह्येतदासीत्'**

**इति काषायणश्रुतिः ॥ १७॥**

यस्य परमेश्वरस्य तत्कालाधिकमधीनमासीत् । तत्पन्तन्त्रत्वेनासमर्थत्वात् । न हि एतदासीदित्युच्यत इत्यर्थः । न च नासदासीन्नोसदासीत्तदानीमिति श्रुत्या कालादिकस्याप्यभावः प्रलयकालीनः प्रतिपाद्यत इति वाच्यम् । सच्छब्दस्य पृथिव्यादित्रयविषयत्वेनासच्छब्दस्य वाय्वन्तरिक्षविषयत्वेन सावकाशत्वात् । पृथिव्यादीनामपि सूक्ष्मरूपस्य प्रलयेऽभावो न वक्तुं शक्यते । तम आसीत्तमसागूळ्हमग्रेऽप्रकेतं सलिलं सर्वमा इदमिति वाक्यशेषविरोधापत्तेः । तमोगूळ्हत्वेन पन्तन्त्रत्वेन सतो अशक्तत्वेन नासीदिति वक्तुं शक्यत्वात् । न च प्रकृत्यादिकं विना जगत्सृष्टिरित्यत्र किंचित्प्रमाणमस्तीत्याह न चेति ।

## ।। ॐ असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् ॐ ।। १८ ।।

'नासदासीन्नो सदासीत् (ऋ. १०-१२९-१)' इति सर्वस्यासत्त्वव्यपदेशान्नेति चेन्न । अव्यक्तत्वपान्तन्त्र्यादिधर्मान्तरेण हि तदुच्यते।

'तम आसीत् (ऋ. १०-१२९-१)' इति वाक्यशेषात्। न चान्यत्र प्रमाणमस्ति।

प्रलयेऽपि प्रकृतिपुरुषसद्भावे प्रमाणमाह **अजोह्येक इति**।

'अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः (महाना. १०-५)'।

'अनाद्यनन्तं जगदेतदीदृक् प्रवर्तते नात्र विचार्यमस्ति।
न चान्यथा क्वापि च कस्य चेदमभूत्पुरा नापि तथा
भविष्यत्'।।

'असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरम् (भ. गी. १६-८)'।

अजामेकां लोहितशुक्लकृष्णामित्यादिनोक्तां न जायत इत्यजां प्रकृतिमेको न जायत इत्यजो जीवो जुषमाणोनुशेते। प्रलये जहात्येनां भुक्तभोगामजोन्यो मुच्यमान इत्यर्थः। एतदेव प्रमाणान्तरैः द्रढयति अनाद्यनन्त मित्यादिना। व्रीह्यादिवत्प्रवाहरूपेण वर्तमानत्वादीदृगित्युक्तं जगद्रज्जुसर्पवत्क्वापि बाधितं नाभूत्पुरा न च भविष्यत्त्युत्तरत्रेत्यर्थः। प्रवृत्तिं च निवृत्तिं च जनानविदुरासुराः। असत्यमप्रतिष्ठमित्यादिना विश्वमिथ्यात्वमतमासुरमिति दर्शयति। असत्यमिति विश्वमिथ्यात्वमतस्यासुरत्वं युक्तं विष्णुमाहात्म्यविरुद्धत्वादित्येतदुच्यते **असत्यमाहुरिति**।

**'असत्यमाहुर्जगदेतदज्ञाः शक्तिं हरेर्ये न विदुः पुरां हि'।**

**'यस्सत्यरूपं जगदेतदीदृक्सृष्ट्वा त्वभूत्सत्यकर्मा महात्मा'।**

**'अथैनमाहुस्सत्यकर्मेति सत्यं ह्येवेदं विश्वमसौ सृजते।**

**अथैनमाहुर्नित्यकर्मेति नित्यं ह्येवासौ कुरुते'।**

पुनरपि विश्वसत्यत्वं श्रुत्या दृढीकरोति **यच्चिकेतेति**।

**'यच्चिकेत सत्यमित्तन्न मोघम् (ऋ. १०-५५-६)' इत्यादि श्रुति स्मृतिस्मृतिभ्यः।**

कितकरण इत्यस्माद्धातोर्यद्विश्वमिन्द्रादिनामा हरिश्चिकेत चकारेति व्याख्येयम्। तन्नमोघं तन्न मिथ्येत्यर्थः। नेहनानास्ति किंचनेत्येत-द्वाक्यविरोधमुक्तवाक्यानामाशङ्क्य परिहरति। **परस्पर विरोध इत्यादिना।**

**'परस्परविरोधे तु वाक्यानां यत्र युक्तता।**

**तथैवार्थः परिज्ञेयो नावाक्या युक्तिरिष्यते'**

**इति बृहत्संहितायाम्।**

**'विरुद्धवत्प्रतीयन्त आगमा यत्र वै मिथः।**

**तत्र दृष्टानुसारेण तेषामर्थोऽन्ववेक्ष्यत' इति च।**

**'ईशोऽनीशो जगन्मिथ्या न पूज्यो गुरुरित्यपि।**

**इत्यादिवद्विरुद्धानि वचनान्यथ युक्तयः।**

**प्रमाणैर्बहुभिर्ज्ञेया आभासा इति वैदिकैः॥**

**वेदवेदानुसारेषु विरोधेऽन्यार्थकल्पना।**

**अन्येषां तु विरुद्धानां विप्रलम्भोऽथवा भ्रमः'**

**इति च भागवततन्त्रे।**

**'शास्त्रार्थयोक्तोऽनुभवः प्रमाणं मतम्।**
**मध्यमं त्वागमो ज्ञेयः प्रत्यक्षमधमं स्मृतम्॥**

यथेह भूतले घटो नास्तीत्यनेनापि न जीवादिभेदो निषिध्यते । प्रत्यक्षादिप्रमाणविरोधादिहेतिपदवैय्यर्थ्याच्च नानानास्तीत्येतावता पूर्णत्वात् । न च सर्वभेदो निषेद्धुं शक्यते । कुत्रापि सर्वभेदानिषेधाद्भेदस्य निषेद्धुं अशक्यत्वात्तस्यापि निषेधेतन्निषेधाद्भेदः सन्निषेधाद्भेद इत्यनवस्था स्यात् । सर्वभेदतन्निषेधयोर्भेदाभावे सर्वभेदनिषेध इति वक्तुमशक्यत्वाच्च । अतो यदेवेह तदमुत्रेति प्रस्तुते परमात्मनि नेहनानास्तीतिनानात्वं निषिध्यते । तत्तल्लोकभेदेन नानेकः परमेश्वरः किं त्वेक एवेत्यर्थः । यथा मे माता वन्ध्यतिवदीशोनीश-इत्येतद्व्याहृतमेवं जगन्मिथ्येत्येतदपि व्याहतमेव । जगन्मिथ्ये-तद्वाक्यार्थयोर्जगदन्तर्भूतत्वेन मिथ्यात्वापातात् । मिथ्यात्वमिथ्यात्वे जगत्सत्यत्वापातादित्यर्थः । नावाक्यायुक्तिरिष्यत इति यदुक्तं तत्प्रपञ्चयति **प्रत्यक्षयोरिति**।

**प्रत्यक्षयोरागमयोर्विरोधे निश्चयाय तु।**
**अनुमाद्या न स्वतन्त्राः प्रामाणपदवीं ययुः'**

**इति पुरुषोत्तमतन्त्रे॥ १८॥**

सत्वाच्चावस्येति यदुक्तं तत्प्रपञ्चयति युक्तेरित्यादिना साधनसत्ता-देरीश्वराधीनत्वेऽपि साधनसम्पत्तेरीशितव्यतया भगवदैश्वर्यद्योतकत्व-ेनोपयुक्तत्वात् अव्द्यः सम्भूतो हिरण्यगर्भ इत्यष्टावित्यादि शब्दान्तरात् घटादीनां कर्तृप्रयोज्यसाधनजन्यत्वदर्शनात् । प्रकृत्यादि साधनैरीश्वरो जगत्सृजतीति युक्तमेव । साधनानां साधनत्वमिति हि उक्तं तत्स्पृष्टयति यथेत्यादिना । यः पृथिवीमन्तरो यमयतीत्यादिना सर्वान्तर्यामित्वश्रवणाद्विष्णोर्युक्तं तदधीनत्वं प्रकृत्यादिसाधनानामित्यर्थः ।

ॐ युक्तेः शब्दान्तराच्च ॐ ॥ १९ ॥

'साधनानां साधनत्वं यदात्माधीनमिष्यते।

तदा साधनसम्पत्तिरैश्वर्यद्योतिका भवेत्'

इत्यादेः साधनान्तरेण सृष्टिर्युक्ता।

'अद्भ्यः सम्भूतो हिरण्यगर्भ इत्यष्टौ (महाना. १-१२)'

इत्यादि शब्दान्तराच्च॥ १९॥

॥ ॐ पटवच्च ॐ ॥ २० ॥

साधनान्तरेण हि पटादिसृष्टिर्लोके दृष्टा॥ २०॥

॥ ॐ यथा प्राणादिः ॐ ॥ २१ ॥

तच्च साधनजातं तेनानुप्रविष्टमेव यथा शरीरेन्द्रियादिः।

'प्रकृतिं पुरुषं चैव प्रविश्य पुरुषोत्तमः।
क्षोभयामास भगवान् सृष्ट्यर्थं जगतो विभुः'

इति कौर्मे॥ २१॥

*॥ आरम्भणाधिकरणम् ॥ ६ ॥*

यदन्तर्यामिप्रेर्यत्वं तद्युक्तं जडानामेव। न जीवस्य चेतनत्वादिति वाच्यं हिताकरणादहितकरणाच्च । अहितकारिणि ज्ञातेपि क्वचित्प्रवृतिदर्शनात् । हितकारिणि ज्ञातेपि क्वचिदप्रवृत्तेः नाज्ञानकृतं हिताकरणादिकमिति वक्तुं शक्यते। न च कर्मकारितं तदिति वाच्यम्। कर्मणोऽचेतनस्य प्रेरकेश्वरमन्तरेण कार्यकारणत्वायोगात् । तस्मादस्वतन्त्रो जीवः । तदाह **जीवकर्तृत्वपक्ष इत्यादिना**।

जीवकर्तृत्वपक्षः श्रुतिप्राप्तो विस्तरान्निराक्रियते॥

## ।। ॐ इतर व्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॐ ।। २२ ।।

जीवकर्तृत्वपक्षे हिताकरणमहितकरणं च न स्यात् ।। २२ ।।

## ।। ॐ अधिकं तु भेदनिर्देशात् ॐ ।। २३ ।।

न च ब्रह्मणः श्रमचिन्तादिदोषप्राप्तिः । अधिकशक्तित्वात् ।

'श्रोता मन्ता द्रष्टाऽऽदेष्टा घोष्टा विज्ञाता सर्वेषां भूतानामन्तरपुरुषः (ऐ. आ. ३-२-४)' ।

'एष त आत्मा सर्वान्तरः (बृ. ५-५-१)'

'योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति (बृ. ५-५-१)'

इत्यादिविशेषनिर्देशात् ।। २३ ।।

## ।। ॐ अश्मादिवच्च तदनुपपत्तिः ॐ ।। २४ ।।

चेतनत्वेऽप्यश्मादिवदस्वतन्त्रत्वात्स्वतः कर्तृत्वानुपपत्तिर्जीवस्य ।

एतेन शिष्टा अपरिग्रह अपि व्याख्याता इत्यत्र सङ्क्षेपेण निराकृतत्वात् श्रुतिप्राप्तजीवकर्तृत्वपक्षस्य विस्तरान्निराक्रियेत्युक्तम् । परमेश्वरस्यैव स्वातन्त्र्यमिति प्रतिपादयितुं जीवस्वातन्त्र्ये दूषिते परश्चोदयति । बहुकार्यव्यापृतस्य कर्तुः श्रमचिन्तादिदोषदर्शनाज्जगत्कर्तुरपि श्रमचिन्तादि-दोषप्रसक्तेः जीववत्पारतन्त्र्यमिति । तन्न वाच्यम् । जगत्कर्तुरीश्वरस्य ग्राहकेण वेदेन सर्वसामर्थ्ययुक्तत्वेन सर्वदोषरहितत्वेन गृहीतत्वात् । धर्मिग्राहकप्रमाणविरोधापत्तेः । तथाहि । श्रोतामन्तेत्यादिश्रुत्या परमात्मनो युगपत्सर्वश्रोतृत्वसर्वगन्तृत्वसर्वद्रष्टृत्वसर्वदिष्टुकत्वादि सर्वसामर्थ्यं श्रूयते । एषत आत्मा सर्वान्तर इत्यादिश्रुत्या एतस्यैव अशनायापिपासादिसर्वदोषराहित्यं श्रूयते । य आत्मापहतपाप्मा विजरो

विमृत्युर्विशोको विजिघत्सोपिपासः सत्यकामः सत्यसङ्कल्प इत्यादिश्रुत्या दृढीक्रियते । मूकोहमितिवदीश्वरः श्रमचिन्तादिमानिति प्रतिज्ञापदव्याघातश्च स्यात् । कर्तुमकर्तुमन्यथाकर्तुं सर्वकर्तृत्वादीश्वरस्य । एतदाह **अधिकमित्यादिना** जीवास्वातन्त्र्यं यदुक्तं दृढीकरोति । **अश्मादिवदित्यादिना** । चेतनप्रेरिताचेतनदृष्टान्तेन जीवानां ईशप्रेर्यत्वे प्रमाणमाह **यथेति** ।

**'यथा दारुमयीं योषां नरः स्थिरसमाहितः ।**

**इङ्गयत्यङ्गमङ्गानि तथा राजन्निमाः प्रजाः' इति भारते ।। २४ ।।**

## ॐ उपसंहारदर्शनान्नेति चेन्नक्षीरवद्धि ॐ ।। २५ ।।

**जीवेन कार्योपसंहारदर्शनात्तस्य कर्तृत्वमिति चेन्न । यथा गोषु क्षीरं दृश्यमानमपि प्राणादेव जायते ।**

**'अन्नं रसादिरूपेण प्राणः परिणयत्यसौ' इति वचनात् ।**

**एवं जीवे दृश्यमानोऽपि कार्योपसंहारोऽस्वातन्त्र्यात्परकृत एव ।**

**'य आत्मानमन्तरो यमयति' ।**

**'नाहं कर्ता न कर्ता त्वं कर्ता यस्तु सदा प्रभुः' इत्यादेः ।। २५ ।।**

नरो यथा दारुमयीं योषां नियमयति । तदङ्गानि च इङ्गयति तथा हरिः इङ्गयतीमाः प्रजा इत्यर्थः । एतमर्थमाक्षिप्य दृष्टान्तान्तरेण य आत्मानमन्तरो यमयतीत्यादिवचनैश्च अनुभवारूढं करोति । उपसंहारेति । न च सर्वकर्तुरीश्वरस्य वेद सिद्धस्य प्रत्यक्षेणानुपलम्भबाधः शङ्कनीयः । देवादिवद्दृष्टिप्रतिबन्धसामर्थ्यात् चक्षुरादीन्द्रियवदतीन्द्रियत्वाच्च । न च योग्यत्वे सत्यदृश्यमानत्वात् खपुष्पवदीश्वरो नास्तीति वाच्यम् । विशेषमासिद्धत्वात् हेतोः । न च युक्तिप्रयोगेणेश्वराभावः साधयितुं शक्यते । ईश्वरग्राहक-मानबाधित्वाद्युक्तेः । अतो युज्यन्ते परस्परविरोधपरिहारेण व्यवस्थाप्यन्ते

वाक्यानि एभिरिति युक्तयो नान्या वक्तव्याः । न तु अप्रतिष्ठितशुष्कतर्काः प्रमाणबाधिता युक्तयः। तदेतदाह देवादिवदित्यादिना।

## ॥ ॐ देवादिवदपि लोके ॐ ॥ २६ ॥

न च कर्तुरीश्वरस्यादृष्टिविरोधः। देवादिवददृश्यत्वशक्तियोगात्। लोकेऽपि पिशाचादीनां तादृशी शक्तिर्दृष्टा किम्वीश्वरस्य।

'न युक्तियोगाद्वाक्यानि निराकार्याण्यपि क्वचित्।
विरोध एव वाक्यानां युक्तयो न तु युक्तयः'

इति बृहत्संहितायाम्॥ २६॥

हिताकरणादिदोषैर्जीवस्यापरप्रेन्तिकर्तृत्वं दूषितम् । तदेव प्रकारान्तरेण दूषयति कृत्स्नेत्यादिना।

## ॥ ॐ कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॐ ॥ २७ ॥

अयं च दोषो जीवकर्तृत्वपक्षे। एकेनाङ्गुलिमात्रेण प्रवर्तमानोऽपि पूर्णप्रवृत्तिस्स्यात्। न च तद्युज्यते, सामर्थ्यैकदेशदर्शनात्। न चैकदेशेन, निरवयवत्वात्।

'अथ यः स जीवः स नित्यो निरवयवो ज्ञाताऽज्ञाता सुखी दुःखी शरीरेन्द्रियस्थः' इति भाल्लवेयश्रुतिः।

न चोपाधिकृतोंऽशः स एवांश उपहित इति, द्वित्वापेक्षत्वात्। चान्यत्कल्प्यम्।

'यद्धि युक्त्या विरुध्येत तदीशकृतमेव हि' इति गत्यन्तरोक्तेः॥ २७॥

कार्येषु प्रवर्तमानो जीवो न तावत्सर्वशक्त्या प्रवर्तते । एकाङ्गुल्या तृणोत्थापने सर्वशक्त्यदर्शनात् । न च तत्र शक्त्येकदेशेन प्रवर्तत इति वक्तुं

शक्यते स्वगतभेदरहितत्वेन जीवस्य। अथ यः स जीवः स नित्यो निरवयव इति निरवयवत्वश्रवणात्। तदुक्तम्। "अंशिनो हि घटाद्याये भिन्नैरेव परस्परम्। अंशैरंशिन उच्यन्ते नैषमेव हि चेतनाः। अतोऽनंशिन इत्येव श्रुतिरेतेषु वर्तत" इति। न च निरंशस्य जीवस्य उपाधिसम्बन्धकृतोंशोऽस्तीति वाच्यम्। अंशः उपाधिसम्बन्धस्यैवैकदेशवृत्तित्वेन उपाधिसम्बद्धांशासम्बद्धांशयोरवश्यम्भावित्वेन निरवयवत्वव्याकोपात्। न च सर्वशक्त्येकदेशशक्तिविकल्पासहत्वात् न जीवप्रवृत्तिर्वाच्येति कल्प्यम्। यद्धि युक्त्या विरुध्येत तदीश कृतमेव हीति गत्यन्तरोक्तेः। शून्यानिर्वाच्यस कल्पनस्यायुक्तत्वात्। अघटितघटकत्वं हि ईश्वरस्यैव युक्तं नान्यस्य। तदुक्तम्। 'अनंशस्यापि जीवस्य किञ्चित्सामर्थ्ययोजनाम्। कार्येषु यः करोत्यद्धा नमस्तस्मै स्वयम्भुवे"। यदि भागेन कार्येषु जीवशक्तिं न योजयेत्। अतः तदा हि सर्वत्र कृत्स्नयत्नोंशितापि चेति। कृत्स्नप्रयत्नश्चापद्येतांशिता वा आपद्येतेत्यर्थः। कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वेति विकल्पेन यज्जीवप्रवृत्तेः अघटनमुक्तं तदीश्वरप्रवृत्तेरपि समानमिति न वाच्यम्। अचिन्त्यशक्तेरीश्वरस्यान्यस्मिन्नघटितं घटयतः स्वस्मिन्नघटितघटने का शङ्का। अघटितघटकत्वं च ईशस्य योऽसौ विरुद्ध इत्यादिश्रुतिसिद्धमिति न तर्केण धर्मिग्राहकप्रमाणविरुद्धेन बाध्यते।

*॥ इतरव्यदेशाधिकरणम् ॥ ७ ॥*

तर्को न्यायरूपः वाक्ययोः परस्परविरोधपरिहारेण विषयव्यवस्थापनाया उपयुक्तो न स्वतन्त्रः परवस्तुनि प्रवर्तते। तदेतदाह **श्रुतेरित्यादिना**।

## ॐ श्रुतेस्तु शब्दमूलत्वात् ॐ ॥ २८ ॥

**न चेश्वरपक्षेऽयं विरोधः।**

**'योऽसौ विरुद्धोऽविरुद्धो मनुरमनुरवाग्वागिन्द्रोऽनिन्द्रः प्रवृत्तिरप्रवृत्तिः स परः परमात्मा' इति पैङ्ग्यादिश्रुतेरेव।**

शब्दमूलत्वाच्च न युक्तिविरोधः।

'यद्वाक्योक्तं न तद्युक्तिर्विरोद्धुं शक्नुयात्क्वचित्।

विरोधे वाक्ययोः क्वापि किञ्चित्साहाय्यकारणम्' ॥

इति पुरुषोत्तमतन्त्रे ॥ २८ ॥

॥ ॐ आत्मनि चैवं विचित्राश्च हि ॐ ॥ २९ ॥

परमात्मनो विचित्राश्च शक्तयस्सन्ति, नान्येषाम्।

'विचित्रशक्तिः पुरुषः पुराणो न चान्येषां शक्तयस्तादृशाः स्युः।

एको वशी सर्वभूतान्तरात्मा सर्वान्देवानेक एवानुविष्टः'

इति श्वेताश्वतरश्रुतिः ॥ २९ ॥

यदुक्तमघटितघटकत्वमीश्वरस्यैव तद्दृढीकरोति । आत्मनि चेत्यादिना । अत्र यद्विचित्रशक्तित्वमुक्तं विष्णोः तद्विश्वतश्चक्षुरित्यादि श्रुत्या सर्वतः पाणिपादं तमिति भगवद्वाक्येन चावगम्यते । अतो बहुभुक्त्वं यथा दोषो नृषुवनै हरौ क्वचित् इत्ययमेव न्यायः साधीयानित्याह **स्वपक्षेत्यादिना**।

॥ ॐ स्वपक्षदोषाच्च ॐ ॥ ३० ॥

'ये दोषा इतरत्रापि ते गुणाः परमे मताः।
न दोषः परमे कश्चिद्गुणा एव निरन्तराः'

इति वचनाज्जीवपक्ष एव दोषो न परपक्षे।

'अथ यस्स दोषः साञ्जनः सजनिः स जीवोऽथ
यः स निर्दोषो निष्कलः सगुणः परः परमात्मा'

इति काषायणश्रुतिः ॥ ३० ॥

विचित्रशक्तिर्भगवान् इत्युक्तं न केवलं विचित्रशक्तिर्भगवान् किन्तु सर्वशशक्तिरेवेत्याह **सर्वपेत्यादिना**।

## ॐ सर्वोपेता च तद्दर्शनात् ॐ ॥ ३१ ॥

**'सर्वैर्युक्ता शक्तिभिर्देवता सा परेति यां प्राहुरजस्रशक्तिम्। नित्यानन्दा, नित्यरूपाऽजरा च या शाश्वताऽत्मेति च यां वदन्ति' इति च चतुर्वेदशिखायाम्॥**

**अतो न केवलं विचित्रशक्तिः किन्तु सर्वशक्तिरेवं॥ ३१ ॥**

प्राकृतदेहेन्द्रियकरणवतामेव कर्तृत्वदर्शनात्करणरहितस्य चेश्वरस्य कर्तृत्वं न युज्यत इति न वाच्यम्। अपाणिपादो जवनो गृहीता पश्यत्यचक्षुः सश्रुणोत्यकर्णः। न नम्यकार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते। पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेत्यादि श्रुत्या प्राकृतदेहेन्द्रियरहितस्येश्वरस्याचिंत्यशक्तित्वेन तद्व्यापारोक्तेः जगत्कर्तृत्वाविरोधात्। सर्वोपेताचेत्यत्र सामान्यतः सर्वशक्त्युपेतत्वोक्त्या जवनग्रहणादि शक्तिसिद्धेर्विकरणत्वान्नेति चेदित्येतच्चोद्यपरिहारो भवत्येव। तथापि विकरणस्यापीश्वरस्य विशेषतो जवनग्रहणादि शक्तिप्रतिपादकश्रुत्युद्भावनार्थं पुनराशङ्क्य परिहृतमित्यदोषः। पुररुक्तिपरिहारश्च प्रमेयैक्ये प्रमाणोपन्यासात्। प्रमाणैक्ये प्रमेयविशेषोपन्यासात् भवत्येव। तदुक्तं 'मानमेय विशेषेण-पुनरुक्तिर्नजायत इति तदेतदाह विकरणत्वादिति।

## ॥ ॐ विकरणत्वान्नेति चेत्तदुक्तम् ॥ ३२ ॥

**न च करणाभावादनुपपत्तिरिति युक्तम्।**

**'अपाणिपादो जवनो गृहीता पश्यत्यचक्षुः स श्रुणोत्यकर्णः।**

स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तम्'

(श्वे. ३-१९) ॥

'न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते।

पराऽस्यशक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च'

(श्वे. ६-८) इत्यादि श्रुतिभ्यः।

'सर्वोपेता च' इति सामान्यपरिहारेऽपि विशेषयुक्त्यर्थं पुनराशङ्का ॥ ३२ ॥

*॥ श्रुतेस्तुशब्दमूलत्वाधिकरणम् ॥ ८ ॥*

यत्प्रयोजनार्थं सृष्ट्यादिस्तदूनत्वान्न पूर्णतेत्यत आह—

**॥ ॐ न प्रयोजनत्त्वात् ॐ ॥ ३३ ॥**

'अथैष एव परमानन्दः (बृ. ६-३-३३)' इत्यादिना कृतकृत्यत्वान्न प्रयोजनाय सृष्टिः। किन्तु ॥

**॥ ॐ लोकवत्तु लीलाकैवल्यम् ॐ ॥ ३४ ॥**

यथा लोके मत्तस्य सुखोद्रेकादेव नृत्तगानादिलीला न तु प्रयोजनापेक्षया, एवमेवेश्वरस्य। नारायणसंहितायां च—

'सृष्ट्यादिकं हरिर्नैव प्रयोजनमपेक्ष्य तु।

कुरुते केवलानन्दाद्यथा मत्तस्य नर्तनम् ॥

पूर्णानन्दस्य तस्येह प्रयोजनमपेक्ष्य कुतः।

युक्ता अप्याप्तकामाः स्युः किमु तस्याखिलात्मनः' इति ॥

**'देवस्यैष स्वाभावोऽयमाप्तकामस्य का स्पृहा (मां. २-२९)' इति च श्रुतिः ॥ ३४ ॥**

प्रयोजनोद्देशाभावे सृष्ट्यभावात् उद्दिश्यैव प्रयोजनं यदि जगदीश्वरः सृजति, तथासत्यनाप्तकामत्वाद्यज्ञदत्तवदनीश्वरः स्यात् इति न वाच्यम् । प्रयोजनोद्देशाभावेऽपि अग्नेर्दाहकत्ववत् सृष्ट्यादिलीलास्वभाववत्वादीश्वरस्य जगत्सृष्ट्याद्युपपत्या अवाप्तकामत्वाविरोधात् । तथाहि श्रुतिः । क्रीडार्थं सृष्टिरिन्यन्ये भोगार्थमितिचापरे । देवस्यैष स्वभावोयमाप्तकामस्य का स्पृहेति । जगत्सृष्ट्यादिलीलास्वभावत्वाज्जगत्सृष्टादिकमीश्वरः करोति । न तु भोगार्थम् । आप्तकामत्वात् । आसमन्तादिषु इत्येषः इत्युच्यते च्युतस्वभाव इत्यर्थः ।

*॥ नप्रयोजनाधिकरणम् ॥ ९ ॥*

सुकृतिनः स्वर्गादिस्थान् दुष्कृतिनो नरकादिस्थान् सृजतीति विषमो निर्घृण इति न शङ्कनीयम् । न ह्यदण्ड्याननुगृह्णन् दण्ड्यान् दण्डयन् राजा विषमो निर्घृण इत्युच्यते लोके । तथाहि श्रुति । पुण्येन पुण्यं लोकं नयति पापेन पापमिति । एष ह्येव साधुकर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते । एष उ ....धुकर्म कारयति तं यं अधो विनीषत इति वचनादपि न वैषम्यादिकमाशङ्कनीयं ईश्वरस्य । 'पुण्यपापादिकं विष्णुः कारये पूर्वकर्मणा । अनादित्वात्कर्मणश्च न विरोधः कथंचनेति वचनात् । अनादित्वात्कर्मण इति कर्मपरम्पराया इत्यर्थः । स्वाधीनविचित्रानादिकर्मपरम्परां लीलयैवानुसृजति जगद्वैचित्र्य सृजतीश्वरः न तु स्वतोऽसामर्थ्येन । द्रव्यं कर्म च कालश्च स्वभावो जीव एवच । यदनुग्रहतः सन्ति न सन्ति यदुपेक्षया इत्यादि वचनविरोधात् । पुण्यस्य शोभनमेव फलं पापस्याशोभनमेव फलमित्येतदन्यथाकर्तुं समर्थोऽपि न करोतीत्येतत् वैषम्यं नैर्घृण्यं च अस्तीश्वरस्य तदङ्गीकारे बाधकाभावात् । तदुक्तम् । वैषम्यं चैव नैर्घृण्यं वेदाप्रामाण्यकारणम् । नाङ्गीकार्यमतोन्यत्तु न वैषम्यादिनामकमिति । तदाह **सर्वकर्तृत्व इत्यादिना** ।

सर्वकर्तृत्वे वैषम्यनैर्घृण्ये तस्येत्यतो वक्ति—

॥ ॐ वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति ॐ ॥ ३५ ।

कर्मापेक्षया फलदातृत्वान्न तस्य वैषम्यनैर्घृण्ये।

'पुण्येन पुण्यं लोकं नयति पापेन पापम् (प्र. ३-७)'

इति हि श्रुतिः ॥ ३५॥

ॐ न कर्माविभागादिति चेन्नानादित्वात् ॐ ॥ ३६ ॥

यदपेक्षयाऽसौ फलं ददाति न तत्कर्म।

'एष ह्येव साधुकर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषत एष उ एवासाधुकर्म कारयति तं यमधो निनीषते (कौ. ३-८)'

इति श्रुतेः कर्मणोऽपि तन्निमित्तत्वादिति चेन्न। तस्यापि पूर्वकर्म कारणमित्यनादित्वात्कर्मणः। भविष्यत्पुराणे च—

'पुण्यपापादिकं विष्णुः कारयेत्पूर्वकर्मणा।
अनादित्वात्कर्मणश्च न विरोधः कथञ्चन' इति॥ ३६॥

ॐ उपपद्यते चाप्युपलभ्यते च ॐ ॥ ३७ ॥

न च कर्मापेक्षत्वेनेश्वरस्यास्वातन्त्र्यम्।

'द्रव्यं कर्म च कालश्च स्वभावो जीव एव च।
यदनुग्रहतः सन्ति न सन्ति यदुपेक्षया'

इत्यादिना कर्मादीनां सत्त्वस्यापि तदधीनत्वात्। न च पुनर्वैषम्याद्यापातेन दोषः। तादृशवैषम्यादेरुपलभ्यमानत्वात्।

'स कारयेत्पुण्यमथापि पापं न तावता दोषवानीशिताऽपि। ईशो यतो गुणदोषादिसत्त्वे स्वयं परोऽनादिरादिः प्रजानाम्' इति चतुर्वेदशिखायाम्॥ ३७॥

*॥ इति वैषम्यनैर्घृण्याधिकरणम् ॥ १० ॥*

**अवशिष्टैरुपसंहरति—**

अवशिष्टशङ्कोद्धारणेन पादार्थमुपसंहरत्सूत्रमुपन्यस्य व्याचष्टे । **सर्वधर्मोपपत्तेरित्यादिना।**

**॥ ॐ सर्वधर्मोपपत्तेश्च ॐ ॥ ३८ ॥**

**'गुणाः श्रुताः सुविरुद्धाश्च देवे सन्त्यश्रुता अपि नैवात्र शङ्का।**
**चिन्त्या अचिन्त्याश्च तथैव दोषाः श्रुताश्च नाज्ञैर्हि तथा**
**प्रतीताः' इति सर्वगुणोपपत्तिश्रुतेश्च॥ ३८॥**

चिन्त्या अचिन्त्याश्च गुणाः विष्णौ वेदे सन्तीत्यर्थः । तदुक्तम् । यदधीना गुणाश्चैव दोषा अपि च सर्वशः। गुणास्तस्य कथं न स्युः स्युर्दोषाश्च कथं पुनरिति।

इति सत्तर्कदीपावल्यां द्वितीयाध्यायस्य प्रथमः पादः

*॥ इति सर्वधर्मोपपत्त्यधिकरणम् ॥ ११ ॥*

*इति श्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रभाष्ये श्रीमदानन्दतीर्थभगवत्पादाचार्य विरचिते द्वितीयाध्यायस्य प्रथमः पादः ॥ २ ॥ १ ॥*



## द्वितीयः पादः

जगज्जन्मादिकर्तरि नारायणे सर्ववेदप्रतिपादिते पूर्वोद्भावितस्मृत्यादिविरोधान् पूर्वपादे परिहृत्य अस्मिन्पादे विशेषतः परपक्षनिराकरणं क्रियते । सामान्यतस्तस्मिन्निराकरणं इतरेषां चानुपलब्धेरित्यत्र कृतं पशुपतिकपिलकणादादिग्रन्थोक्तार्थानां केषाञ्चिद्योगानुपलम्भबाधितत्वोक्त्या तद्ग्रन्थानां अनाप्तोक्तत्वसिद्धेस्तदाह **इतरेषामित्यादिना।**

**॥ ॐ ॥ इतरेषां चानुपलब्धेरिति सामान्यतो निराकरणं समयानां कृतम्। विशेषतो निराकरोत्यस्मिन्पादे।**

**अचेतनप्रवृत्तिमतं प्रथमतो निराकरोति—**

तत्र तावन्निरीश्वरसाङ्ख्यमतं निराकरोति **रचनेत्यादिना।**

**॥ ॐ रचनानुपपत्तेश्च नानुमानम् ॐ ॥ १ ॥**

**अचेतनस्य स्वतः प्रवृत्त्यनुपपत्तेर्नानुमानपरिकल्पितं प्रधानं जगत्कर्तृ । च शब्देन प्रमाणाभावं दर्शयति ॥ १ ॥**

न च कर्तृविशेषाप्रेरितात्प्रधानात् जगद्रचनानुमाऽतुं शक्यते । दृष्टान्ताभावात् । गृहरचनाभावत् कर्तृविशेषाज्जगद्रचनानुमातुं शक्यते । न च नद्युदकादिवदीश्वराप्रेरित प्रधानप्रवृत्त्या सृष्टिर्युक्तेति वाच्यम् । योन्तरो यमयत इति श्रुतेः । उदकादेरपीशप्रेन्तित्त्वसिद्धेः । निषुसीद गणपते गणेषु त्वामाहुर्विप्रतमं कवीनां न ऋते त्वत्क्रियते किंचनेति श्रुत्यन्तरादप्येषोऽर्थोऽवगम्यते । विप्रतमशब्देन मेधावितम उच्यते । मुख्यतः सर्वदेवानामवाच्यतया विष्णुरेवाभिधीयते। न हि तदन्यं प्रति त्वदृते त्वया विना किंचन न क्रियत इति।

## ॥ ॐ प्रवृत्तेश्च ॐ ॥ २ ॥

चेतनस्य स्वतः प्रवृत्तिदर्शनाच्च ॥ २ ॥

## ॥ ॐ पयोऽम्बुवच्चेत्तत्रापि ॐ ॥ ३ ॥

पयोऽम्बुवदचेतनस्यापि प्रवृत्तिर्युज्यत इति न युक्तम्।

एतस्य वा अक्षरस्य प्रशासने गार्गिप्राच्योऽन्या नद्यः स्यन्दन्ते, याश्च श्वेतेभ्यः पर्वतेभ्यः प्रतीच्योऽन्या यां यां च दिशमनु (बृ. ५-८-९)'।

'एतेन ह वाव पयो मण्डं भवति'
इत्यादिना तत्रापि ईश्वरनिमित्तप्रवृत्तिश्रुतेः ॥ ३ ॥

## ॥ ॐ व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॐ ॥ ४ ॥

'न ऋते त्वत्क्रियते किञ्चनारे (ऋ. १०-११३-९)' इति तद्व्यतिरेकेण कस्यापि कर्मणोपनवस्थितेः अनपेक्षितमेवाचेतनवादिमतम् ॥ ४ ॥

**अन्यत्रेत्यादिना**। ब्रह्मन्निव इति ब्रह्मणीति ग्राह्यम्। अग्निव्याप्तायः पिंडे अयमग्निरितिवत् ब्रह्मव्याप्तं जगत् ब्रह्मैवेदं सर्वमिति श्रुत्योच्यते। सर्वान्तर्यामित्वेनात्र सर्वगत्वं नारायणस्य विवक्षितं नाकाशस्येव सर्वत्र स्थितिमात्रम्। सर्वान्तर्यामित्वादीश्वरस्य प्रकृत्यादिसत्ताप्रदत्वं तत्तच्छक्त्युद्बोधकत्वं अन्यत्राभावाच्चेति सूत्रगतेन च शब्देन सूचितम् पुराणवाक्याभ्यामित्युच्यते। 'स एव भूयो निजवीर्यचोदित'मित्यनेन प्रकृतिशक्त्युद्बोधकत्वमुच्यते। 'द्रव्यं कर्म च कालश्च स्वभावो जीव एव च। यदनुग्रहतः सन्ति न सन्ति यदुपेक्षयेत्यनेन प्रकृत्यादिसत्ताप्रदत्वमुच्यते। द्रव्यशब्देन पूर्वप्रकृताप्रकृतिरुच्यते। एवं नित्यानित्यजगन्नियन्तृत्वावगमात् परमेश्वरस्य तृणादिकस्य कार्यस्य पर्जन्यवन्नानुग्राहकत्वमात्रमित्यर्थः।

प्रत्यक्षैकप्रमाणवादिनो जगदनित्यं मन्यमानस्य लोकायतस्य शास्त्रं विषयप्रयोजनरहितत्वादुपेक्षणीयम् । तथाहि । घटादेस्तावत्प्रत्यक्षसिद्धत्वेन ज्ञापनानुप्ययोगान्नासौ विषयः । धमादेरनङ्गीकारात् । न सोऽपि विषयो वक्तुं शक्यते । धमार्थसधर्मनिवृत्त्यर्थं च लोकायासनिवृत्ते धर्माद्यभाववादस्य लोकोपकारः प्रयोजनमिति न वाच्यम् । धर्माद्यभावज्ञाने परस्पर-हिंसादिनापकारस्यैव प्राप्तेः । न च लोकोपकारेण चार्वाकस्य प्रयोजनम् । अदृष्टाभावात् । अतो धर्माध्यभावं वदतः स्वसमयस्यानर्थक्यमङ्गीकृतमेवेति नासौ समयीत्येतत्प्रतिपादयति । लोकेत्यादिना ।

*॥ इति रचनानुपपत्त्यधिकरणम् ॥ १ ॥*

**सेश्वरसाङ्ख्यमतं निराकरोति । यथा पृथिव्या एव पर्जन्यानुगृहीतं तृणादिकमुत्पद्यते, एवं प्रधानादीश्वरानुगृहीतं जगदित्यतो ब्रवीति—**

**॥ ॐ अन्यत्राभावाच्च न तृणादिवत् ॐ ॥ ५ ॥**

**'यच्च किञ्चिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा ।**
**अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः'**

**'ब्रह्मण्येवेदमाविरासीद्ब्रह्मणि स्थितं ब्रह्मण्येव लयमभ्येति ।'**

**'ब्रह्मण्येवेदमाविरासीद्ब्रह्म मध्यतो ब्रह्म सर्वतः'**

**'ब्रह्मैवेदं सर्वम् (बृ. ४-५-१)'**

**इत्यादिश्रुतिभ्योऽन्यत्र जगतोऽभावात्तृणादीनां पर्जन्यवन्नानुग्राहक-त्वमात्रमीश्वरस्य ।**

**'स एव भूयो निजवीर्यचोदितां स्वजीवमायां प्रकृतिं सिसृक्षतीम् ।**
**अनामरूपात्मनि रूपनामनी विधित्समानोऽनुससार शास्त्रिकृत्'**

**इति भागवते ।**

'द्रव्यं कर्म च कालश्चे'त्यादि च। च शब्देन प्रकृतिसत्तादिप्रदत्वं चाङ्गीकृतम्॥५॥

*॥ अन्यत्राभावाधिकरणम् ॥ २ ॥*

लोकायतिकपक्षं निराकरोति—

## ॥ ॐ अभ्युपगमेऽप्यर्थाभावात् ॐ ॥ ६ ॥

यस्य धर्माधर्मौ न स्तः तत्सिद्धान्ते किं प्रयोजनम्। अतः स्वव्याहतेरेवोपेक्ष्यः॥६॥

*॥ अभ्युपगमाधिकरणम् ॥ ३ ॥*

पुरुषोपसर्जनप्रकृतिकर्तृत्ववादमपाकरोति—

निरीश्वरसाङ्ख्यैकदेशमतं अनूद्य दूषयति पुरुषेत्यादिना।

## ॥ ॐ पुरुषाश्मवदिति चेत्तथाऽपि ॐ ॥ ७ ॥

यथा चेतनसम्बन्धादचेतनमेव शरीरमश्मादिकमादाय गच्छति, एवमचेतनाऽपि प्रकृतिः पुरुषसम्बन्धात्प्रवर्तत इति चेन्न। 'न ऋते त्वत्क्रियते' इति तत्रापि तथात्वे दृष्टान्ताभावात्॥७॥

## ॥ ॐ अङ्गित्वानुपपत्तेः ॐ ॥ ८ ॥

शरीरप्रवृत्तौ पुरुषस्याङ्गित्वात्॥

'अङ्गमङ्गी समादाय यथाकार्यं करोत्यसौ' इत्यङ्गित्वव्यवहरोऽनुपपन्नः॥८॥

स्वशरीरप्रेरणे शरीरान्तराभावाच्छरीरवत एव पुरुषस्य कर्तृत्वमित्येतदप्ययुक्तमित्यर्थः।

*॥ पुरुषाश्माधिकरणम् ॥ ४ ॥*

जगदुत्पत्तौ केवलप्रधानस्य प्रवृत्त्यसम्भवेऽपि पुरुषसंबन्धात्प्रवृत्तिर्युज्यते। चेतनसंबन्धादचेतनस्यैव घटादिनिष्पत्तौ प्रवृत्तिदर्शनादिति वाच्यम्। च आतनमन्तरोयमयतीत्यादि, श्रृतौ जीवप्रवृत्तेः भगवत्कारितत्वश्रवणेन तदप्रेन्तिप्रवृत्तौ दृष्टान्ताभावात्। शरीरादेर्हि तावत्पुरुषाङ्गमिति व्यवहारविरोधाच्च। न तस्य सन्निधिमात्रेण स्वकार्यप्रवृत्तिशरीराङ्गत्वमित्यर्थः।

निरीश्वरसांङ्ख्यैकदेशपक्षयोरेकस्मिन्पक्षे दूषिते पक्षान्तरमनूद्य परिहरति **प्रकृत्युपसर्जनेत्यादिना**।

**प्रकृत्युपसर्जनपुरुषकर्तृत्ववादमपाकरोति—**

**॥ ॐ अन्यथापनुमितौ च ज्ञशक्तिवियोगात् ॐ ॥ ९ ॥**

**शरीरसम्बन्धात्पुरुषः प्रवर्तत इत्यङ्गीकारेऽपि स्वतस्तस्यासामर्थ्याच्छरीरसम्बन्ध एवायुक्तः ॥ ९ ॥**

**॥ ॐ विप्रतिषेधाच्चासमञ्जसम् ॐ ॥ १० ॥**

**सकलश्रुतिस्मृतियुक्तिविरुद्धत्वाच्चानीश्वरमतमसमञ्जसम्।**

**'श्रुतयः स्मृतयश्चैव युक्तयश्चेश्वरं परम्।**
**वदन्ति तद्विरुद्धं यो वदेत्तस्मान्नचाधमः' इति पाद्मे ॥ १० ॥**

*॥ इति अन्यथानुमित्यधिकरणम् ॥ ५ ॥*

**परमाण्वारम्भवादमपाकरोति—**

**॥ ॐ महद्दीर्घवद्वाह्रस्वपरिमण्डलाभ्याम् ॐ ॥ ११ ॥**

वैशेषिकाभ्युपगतपरमाण्वारम्भापाकरणत्वेन महद्दीर्घवदित्येतत् सूत्रं व्याचष्टे **महत्वादित्यादिना**।

**महत्त्वाद्दीर्घत्वाच्च यथा कार्यमुत्पद्यते, एवं ह्रस्वत्वात्पारिमाण्डल्याच्चोत्पद्येत । वाशब्दादन्यथैतयोरपि न स्यात्, विशेषकारणाभावात्॥ ११॥**

## ॐ उभयथाऽपि न कर्मातस्तदभावः ॐ ॥ १२ ॥

**ईश्वरेच्छाया नित्यत्वे तद्भावेऽपि परमाणुकर्माभावान्नेदानीमपि तत्स्यात् । अनित्यत्वे तत्कारणाभावात् । अतः परमाणुचेष्टाभावात् तत्कार्यभावः।**

परमाणुपरिमाणकारणकतया द्व्यणुकपरमाणानुत्पत्तौ द्व्याणुकपरमाणुकारणकतयात्र्यणुकपरिमाणानुनिष्पत्तौ परमाणुकारकतया द्व्यणुकोत्पत्तिः द्व्यणुककारणतया त्र्यणुकोत्पत्तिश्च न स्यात् । न हि द्रव्याणामेव कार्यकारणभावः न तु तत्परिणामानामित्येतद्दृष्टं क्वचित्र्यणुकादिश्चित्यभिप्रायः। उभयथाऽपि न कर्मेत्यादिना यत्परमते दूषणमुक्तं तत्स्वमतेऽपि किं न स्यादित्याशङ्क्य परिहरति **वैदिकेश्वरस्येत्यादिना**।

**वैदिकेश्वरस्य तु वेदेनैव सर्वशक्तित्वोक्तेः सर्वमुपपद्यते। स्वत एव काले विशेषाङ्गीकृतेश्च॥ १२॥**

## ॥ ॐ समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॐ ॥ १३ ॥

**कार्यकारणादीनां समवायसम्बन्धाङ्गीकारात्तस्य च भिन्नत्वसाम्यात् समवायान्तरापेक्षायामनवस्थितिः। न च तत्प्रमाणम्। प्रथमसम्बन्धासिद्ध्यैव च तदसिद्धिः। स्वनिर्वाहकत्वे समवाय एव न स्यात्॥ १३॥**

तत्तत्कालभेदेन या सृष्टिस्थित्यादिः सा परमते न स्यात् । अतीनागतादिकालभेदानङ्गीकारात् । औपाधिकभेदस्य सत्वासत्वाभ्यां निरूपयितुमशक्यत्वात् । किं कालेनानुपाधिना । कालानां परस्परं भेद इति

प्रश्नस्य परिहर्तुं अशक्यत्वाद्गुणादिषु शक्तिविशेषानङ्गीकारात् । निर्विशेषेश्वरेच्छावशात् सृष्टिस्थित्यादिकार्यविशेषानुपपत्तिश्च स्यादित्यर्थः । परमाणुभ्यां समवायिकारणाभ्यां द्व्यणुकस्योत्पत्तिः द्व्यणुकेभ्यः समवायिकारणेभ्यस्त्र्यणुकस्योत्पत्तिरित्यादिकः परमाण्वारम्भवादः समवायस्य निरूपयितुमशक्यत्वादनुपपन्नः । तथाहि । अवयवावयविनोः समवायस्य ताभ्यां भिन्नत्वेन समवायान्तरेण भाव्यम् । तस्याप्येवं तस्याप्येवमित्यनवस्था स्यात् । न च अवयवावयविनोः परस्परभेदः तयोःसमवायश्च ततोभिन्नः केनाप्यनुभूयते । अतः प्रथमसमवायस्यासिद्धत्वात् तत्सिध्यर्थं उत्तरोत्तर-समवायकल्पनमप्रामाणिकम् । यदि समवायस्य स्वनिर्वाहकत्व-मङ्गीकृत्य नोत्तरोत्तरसमवायकल्पनमित्युच्यते तर्हि अवयवावयविनोः स्वनिर्वाहकत्व-मङ्गीकृत्य समवायो न कल्प्यताम् । अविशेषात् । यथा समवायस्य स्वनिर्वाहकत्वात् स्वयमेव समवायी समवायान्तर-मन्तरणेत्यङ्गीक्रियते । एवं द्रव्यमेव गुणादिरूपेण तत्सम्बन्धरूपेण स्वयमेव स्वरूपं निर्वहतीत्यङ्गीक्रियताम् । अविशेषात् । तदाह **यदेत्यादिना** ।

परमाण्वादिकारणसङ्घसद्भावेऽपि प्रलयकाले परमाणुसंयोगेन यदि किमपि कार्यं नोत्पद्यते तर्हि इदानीमपि नोत्पद्यताम् । अविशेषात् । असतः सत्तासमवायोजनिरित्यङ्गीकुर्वन् वैशेषिकः समवायवर्ज्जनेरपि नित्यत्व-मङ्गीकुर्यात् । न च अनित्योऽपि कश्चन समवायोऽस्तीति वाच्यम् । अपसिद्धान्तापत्तेः । तदेतदाह **नित्यमेव चेत्यादिना** ।

## ॥ ॐ नित्यमेव च भावात् ॐ ॥ १४ ॥

**नित्यत्वाच्च परमाणूनां समवायस्य च तस्यैव जनित्वाङ्गीकारान्नित्यमेव कार्यं स्यात् । अन्यथा न कदाचित् ॥ १४ ॥**

परमाणूनां नित्यत्वं यदभ्युपगतं तन्न युज्यते । रूपादिमत्वेन घटादिवत् अनित्यत्वानुमानसम्भवात् । यदि रूपादिमतापि परमाणूनां नित्यत्वमङ्गीक्रियते

तर्हि घटादीनामपि तदङ्गीक्रियतामविशेषात्। न च परमाणूनां प्रलये विनाशोस्तु का हानिरिति वाच्यम् । समसवायिकारणाभावेन पुनः पृथिव्यादि-सृष्ट्यभावप्रसङ्गात् । न चैवमपौरुषेयवेदमूलसिद्धान्तोऽनुमाने न विघटयितुं शक्यते । वेदविरुद्धानुमानस्य प्रत्यक्षविरुद्धनुमानवदप्रमाणत्वात् । 'अक्षपाद कणादौ च साङ्ख्ययोगौ च हैतुका' इति नारदीयवचनात् । अहमासं पण्डितकोहैतुको वेदनिन्दकः । आन्वीक्षिकीं तर्कविद्यामनुरक्तो निरर्थकामिति श्रृगालवचनात् । न कणादाक्षपादमतं वेदमूलमिति वक्तुं शक्यते । तदेतदाह **रूपादिमत्वादित्याना।**

## ॥ ॐ रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ॐ ॥ १५ ॥

**रूपादिमत्त्वाच्च परमाणूनामनित्यत्वम्। तथा दृष्टत्वाल्लोके॥ १५॥**

## ॥ ॐ उभयथा च दोषात् ॐ ॥ १६ ॥

**नित्यत्वे परमाणूनां तद्वत्सर्वनित्यत्वं स्यात्। विशेषप्रमाणाभावात्। अनित्यत्वे कारणाभावात्तदुत्पत्त्यभावः॥ १६॥**

## ॥ ॐ अपरिग्रहाच्चात्यन्तमनपेक्षा ॐ ॥ १७ ॥

**श्रुतिस्मृत्यपरिगृहीतत्वाच्चातिशयेनानपेक्षता । 'आन्वीक्षकीं तर्कविद्यामनुरक्तो निरर्थकाम्' इति मोक्षधर्मे॥ १७॥**

*वैशेषिकाधिकरणम् ॥ ६ ॥*

परमाण्वारम्भवादवत्परमाणुपुञ्जवादोप्यनुपपन्नः । तथाहि । परमाणु-पुञ्जशब्दादिभेदः समुदायस्तावदेकपरमाणुहेतुकश्चेत्प्रलये समुदायस्याप्य-विच्छेदः स्यात् । बहुपरमाणुहेतुकश्चेद्बहूसमुदाययोर्भेदोंगीकृतः स्यात् । न च तथा सति बहुत्वैकत्वे समुदायस्य समुदायिभूतानां बहुत्वमिति

समुदायहेतुकत्वं बहुत्वं किं न स्यादिति । अन्योन्याश्रयतया परमाणु-पुञ्जवादोऽपास्तः स्यात् । तदाह **परमाणुपुञ्जेत्यादिना** ।

**परमाणुपुञ्जवादिमतं निराकरोति—**

**॥ ॐ समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॐ ॥ १८ ॥**

**समुदायस्यैकहेतुकत्वं न युज्यते । उभयहेतुकेऽपि अन्योन्याश्रयत्वात्तदप्राप्तिः । अन्यथा सर्वदा समुदायसत्वं स्यात् ॥ १८ ॥**

समुदायो बहुत्वसापेक्षः विरलपरमाणुषु सन्ततिषु विद्यमानः समुदायः सृष्टिकाले परस्परसन्निहितैकैकपरमाण्वपेक्षया यवह्रियत इति नेतरेतराश्रयत्वमिति यद्युच्यते तदपि सर्वविरलपरमाणुभ्य क्षणिकेभ्यो विरलपरमाणुषूत्पद्यमानेषु निबिडपरमाणुषु पुञ्चसम्भवात् । न कालमर्कवशादपि परमाणुपुञ्जसम्भवः । न हि निष्कारणकः परमाणुपुञ्जसम्भवः । न हि निष्कारणकः परमणुपुञ्जव्यवहारः सम्भवति । तदाह **इतरेतरेत्यादिना** ।

**॥ ॐ इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्ति-मात्रनिमित्तत्वात् ॐ ॥ १९ ॥**

**सर्वदा विद्यमानोऽपि समुदायः परस्परापेक्षया व्यवह्रियत इति चेन्न । एकं कार्यमुत्पाद्य तस्य विनिष्टत्वात्परस्परप्रत्ययस्तदपेक्षया व्यवहार इति न युज्यते । कारणे सति कार्यं भवत्येवेति हि तस्य नियमः ॥ १९ ॥**

एतदेव विवृणोति **उत्तरेत्यादिना** ।

**॥ ॐ उत्तरोत्पादे च पूर्वनिरोधात् ॐ ॥ २० ॥**

**कार्योत्पत्तावेव कारणस्य विनाशाच्च न विशेषकार्योत्पत्तिः ॥ २० ॥**

पूर्वपरमाणुसादृश्यकारणं यदभिप्रेतं उत्तरपरमाणोः पूर्वपरमाण्वाहित-संस्कारत्वम् । तदनुपपन्नम् । उत्तरपरमाणुकाले पूर्वपरमाण्वभावत् । न हि अविद्यमानोन्यत्र संस्कारमादधाति । सादृश्यकारणसंस्कारार्थमपिसादृश्य संस्कारकारण संस्कारापेक्षयाऽनवस्थापत्तेश्चेत्यभिप्रायः । दूषणान्तरैरपि क्षणिकत्वं दूषयति **असतीत्यादिना**।

## ॥ ॐ असतिप्रतिज्ञोपरोधो यौगपद्यमन्यथा ॐ ॥ २१ ॥

**कारणेविनष्टे कार्यमुत्पद्यते चेत्तत्कार्यमिति प्रतिज्ञाहानिः। तत्काले कारणमस्ति चेद्विनाशकारणाभावाद्यौगपद्यं सर्वकार्याणाम्॥ २१ ॥**

## ॥ ॐ प्रतिसङ्ख्या प्रतिसङ्ख्यानिरोधाप्राप्ति-रविच्छेदात् ॐ ॥ २२ ॥

**कारणे सति कार्यं भवत्येवेति नियमान्निस्सन्तानः ससन्तानश्च विनाशो न युज्यते॥ २२॥**

## ॥ ॐ उभयथा च दोषात् ॐ ॥ २३ ॥

**कारणे सति कार्यं भवत्येवेति नियमे सर्वदा कार्यभावान्न कार्यकारणविशेषः। अनियमे कार्यानुत्पत्तिः॥ २३॥**

क्षणमेकं स्थित्वाभावः क्षणान्तरे परभावमुत्पादयति चेत् क्षिणिको न स्यात्। पूर्वनाशानन्तमुत्तरो जायेत चेत्पूर्वभावादुत्तरो जायत इत्यभ्युपगमहानिः स्यात् । पूर्वभावक्षण एवोत्तरो जायेत चेदुत्तरोत्तरव्यक्तीनामेकक्षण एवावस्थानप्रसङ्गेन क्षणान्तरे घटो न दृश्येत इत्यर्थः। प्रतिसङ्ख्यायते परिदृश्यत इति प्रतिसङ्ख्यानिरोधो मुद्गराभिहतघटनाशः सन्तानोच्छेदरूपः । अप्रति-संख्यानिरोधस्तु प्रतिक्षण घटनाशः सन्त्युच्छेदरहितः । उभावपि

नाशावनुपपन्नौ, कारणे सति कार्यं भवत्येवेत्यभ्युपगमात्। कारणं कार्ये सत्येव भवति न तु तन्नाशानन्तरमिति पदार्थविच्छेदापत्तेः। तदाह **प्रतिसङ्ख्येत्यादिना**। कारणे सति कार्यं भात्येवेत्यनेन कारणक्षण एव कार्यं भवतीत्युक्तत्वात्। कार्यकारणयोरेककालत्वेन गोशृङ्गयोरिव न कार्यकारणभावः एकस्मिन्क्षणे शङ्कनीयः। निरंशत्वाभ्युपगमात् क्षणस्य। तदाह **उभयथेत्यादिना**। यदि परिमाणभेदसिद्धक्षणिकत्वाद्दोषवत् सत्वहेतुना जगत्क्षणिकत्वं साध्येत। तर्हि तेनैव हेतुना आकाश— वद्दीपादिजगदक्षणिकत्वसाधनेन तत्क्षणिकत्वबाधः स्यात्। तदेवेदं दीपादिकमिति जगत्क्षणिकत्वं बाध्यते। बाधकाभावेऽपि यदीयं प्रत्यभिज्ञा बाध्येत, तर्हि दीपस्य क्षणिकत्वसाधकपरिमाणभेददर्शनमपि भ्रमः स्यात्। अविशेषात्। ततश्च जगत्क्षणिकत्वसाधकानुमानदृष्टान्तः साध्यविकलः स्यात्। न च आकाशस्यासत्वाङ्गीकाराज्जगदक्षणिकत्वसाधकानुमानदृष्टान्तः साध्यविकल इति वाच्यम्। घटोस्तीतिवदाकाशोऽस्तीति विधिमुखप्रत्यतवेद्यत्वेनाकाश सत्वसिद्धेः। अन्यथा घटसत्वमपि न स्यात्। न च आत्मनः क्षणिकत्वं वदता जगतः क्षणिकत्वमनुमातुं शक्यते। व्याप्त्याद्यनुसन्धातुरभावात्। तदाह **आकाशेत्यादिना**।

## ॥ ॐ आकाशे चाविशेषात् ॐ ॥ २४ ॥

**दीपादिषु विशेषदर्शनात्क्षणिकत्वेनान्यत्र क्षणिकत्वमनुमीयते चेत्, आकाशादिष्वविशेषदर्शनादन्यत्रापि तदनुमीयेत॥ २४॥**

## ॥ ॐ अनुस्मृतेश्च ॐ ॥ २५ ॥

**तदेवेदमिति प्रत्यभिज्ञानाच्च। प्रत्यभिज्ञाया भ्रान्तित्वे विशेषदर्शनस्यापि भ्रान्तित्वम्॥ २५॥**

*॥ इति समुदायाधिकरण् ॥ ७ ॥*

क्षणिकपरमाणुपुञ्जवादान्निराकृत्य जगच्छून्यवादमुपक्षिप्य दूषयति । **शून्यवादमित्यादिना।**

शून्यवादमपाकरोति—

**॥ ॐ नासतोऽदृष्टत्वात् ॐ ॥ २६ ॥**

**अदृष्टत्वादसतः कारणत्वं न युज्यते ॥ २६ ॥ ॐ उदासीनानामपि चैवं सिद्धिः ॐ ॥ २७॥**

**असतः कारणत्वे उदासीनानां हेयोपादेयबुद्धिवर्जितानां खपुष्पादीनामपि सकाशात्कार्यसिद्धिः । चशब्दान्न चेदन्यत्रापि न स्यादविशेषात्॥ २७॥**

न च शून्याज्जगदुदितमिति वक्तुं शक्यते । दृष्टान्ताभावात् । न हि शशशृङ्गात्किंचिदुत्पन्नं दृश्यते । अन्यथा वन्ध्यासुतादपि पुत्रोत्पत्तिः स्यात् इत्यर्थः शून्यात्सत्यजगदसम्भवेऽपि मिथ्याजगत्किं न स्यात् इत्याशङ्क्यामाह **नाभावः इत्यादिना।**

**॥ ॐ नाभाव उपलब्धेः ॐ ॥ २८ ॥**

**न च जगदेव शून्यमिति वाच्यम्। दृष्टत्वात्॥ २८॥**

दृष्टत्वान्न जगन्मिथ्येत्येतन्न युज्यते । स्वप्नादिवन्मिथ्यात्वसम्भवादित्याशङ्क्य परिहरति **वैधर्म्यादिति।**

**॥ ॐ वैधर्म्याच्च न स्वप्नादिवत् ॐ ॥ २९ ॥**

**न च दृष्टस्यापि स्वप्नादिवदभावः। तस्योत्तरकाले स्वप्नोऽयं नायं सर्प इत्याद्यनुभवात्। न चात्र तादृशं प्रमाणमस्ति॥ २९॥**

स्वप्नस्य जाग्रत्त्वं मिथ्या तथादृष्टोऽपि रज्जुसर्पोऽपि मिथ्या स्वप्नोऽयं नायं सर्प इति बलवत्प्रमाणबाधित्वात् सर्वदृष्टजगत्सत्यत्वस्य केनाप्यबाधितत्वान्न जगन्मिथ्येत्यर्थः।

*॥इति असदधिकरणम् ॥ ८ ॥*

**विज्ञानवादमपाकरोति—**

## ॥ ॐ न भावोऽनुपलब्धेः ॐ ॥ ३० ॥

**न विज्ञानमात्रं जगत्। तथाऽनुभवाभावात्॥ ३०॥**

## ॥ ॐ क्षणिकत्वाच्च ॐ ॥ ३१ ॥

**ज्ञानं क्षणिकम्। अर्थानां च स्थायित्वमुक्तम्। अतश्च नैक्यम्॥ ३१॥**

जगच्छून्यवादं निराकृत्य जगद्विज्ञानवादमुपक्षिप्य दूषयति । ज्ञानार्थयोरभेदे अहं घट इति प्रतीतिः स्यात् न त्वयं घट इति। अतो नार्थस्य ज्ञानाकारत्वं युज्यते अनुभवविरुद्धत्वात् । जगतः स्थायित्वेन साधितत्वात् । ज्ञानस्य क्षणिकत्वादपि न जगदाकारं ज्ञानमित्यर्थः। बौद्धनिराकरणमुपसंहरति **सर्वथेत्यादिना**।

## ॐ सर्वथापनुपपत्तेश्च ॐ ॥ ३२ ॥

**प्रमाणाभावात् सर्वश्रुतिस्मृतियुक्ति विरुद्धत्वाच्च नैते पक्षा ग्राह्याः॥ ३२॥**

*॥ इति अनुपलब्ध्याधिकरणम् ॥ ९ ॥*

वेदप्रामाण्याभ्युपगमरहितत्वाविशेषाद्बौद्धपक्षनिराकरणानन्तरं जैनपक्षमुपक्षिप्य दूषयति **स्यादित्यादिना**।

स्याद्वादिमतं दूषयति—

**॥ ॐ नैकस्मिन्नसम्भवात् ॐ ॥ ३३ ॥**

**सत्स्यादसत्स्यात्सदसत्स्यात्ततोऽन्यच्च स्यादित्ये तन्नैकस्मिन् युज्यते। अदृष्टत्वेनासम्भवात्॥ ३३॥**

**ॐ एवञ्चाऽत्माकात्स्न्र्यम् ॐ ॥ ३४ ॥**

**जीवस्य शरीरपरिमितत्वाङ्गीकारेऽण्वादिशरीरस्थस्य हस्त्याशरीरेऽकात्स्न्र्यं स्यात्॥ ३४॥**

जगत्स्यादत्स्यात्सदसत्स्यात्सदसद्विलक्षणं च स्यादिति स्याद्वादिमतं न युज्यते । परस्परपराहतत्वात् । न हि यदेव वस्तु सत्स्यादित्युक्तं तदेव तत्रैव तस्मिन्काल एव स्वेनैव रूपेणासत्स्यादिति वक्तुं शक्यते विरोधात्। स्याद्वादिना यदभ्युपगतं देहपरिमाणो जीव इति । तत् अनुपपन्नम् । कीटदेहपरिमाणस्य जीवस्य कर्मवशात् गजदेहे वर्तमानस्य देहव्याप्तित्वापत्तेः । तदाह **एवं चेत्यादिना** । न च गजगर्दभादिदेहेषु वर्तमानस्य जीवस्य तत्तद्देहपरिमाणत्वं क्रमेणेति वाच्यम् । बुद्धिर्ह्रासादिविकारित्वेन देहवदनित्यत्वप्रसक्तेः । तदाह **न चेदित्यादिना।**

**ॐ न च पर्यायादप्यविरोधो विकारादिभ्यः ॐ ॥ ३५ ॥**

**तत्तच्छरीरस्थस्य तत्तत्परिमाणत्वमिति न मन्तव्यम्। विकारित्वात् अनित्यत्वप्रसक्तेः॥ ३५॥**

देहपरिमाणत्वं जीवस्य युक्त्यन्तरेणापि विघटयति **अन्त्येत्यादिना।**

॥ ॐ अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषात् ॐ ॥ ३६ ॥

परिमाणाभावे स्वरूपाभावप्राप्त्याऽन्त्यपरिमाणस्थितेस्तदर्थत्वेन शरीरस्थितेरुभयनित्यत्वादविशेषेण सर्वशरीरनित्यत्वं स्यात्॥ ३६॥

*नैकस्मिन्नधिकरणम् ॥ १० ॥*

मुक्तजीवस्य देहावच्छिन्नपरिमाणस्य परिमाणाच्छेदकेन चरमदेहेन नित्येन भाव्यम् । परिमाणरहितद्रव्यस्वरूपाभावात् । न चाणुत्वं महत्वं च जीवस्य वक्तुं शक्यते मुक्तस्य स्याद्वादिना । नित्यत्वे च चरमदेहस्य देहत्वाविशेषात् तद्वत्सर्ववेदस्य नित्यत्वं स्यादित्यर्थः ।

*॥ इति स्याद्वाद्यधिकरणम् ॥*

पाशुपतपक्षमपाकरोति—

॥ ॐ पत्युरसामञ्जस्यात् ॐ ॥ ३७ ॥

अधुना पशुपतेर्जगत्कर्तृत्वं श्रुतिभिः तावन्निराकरोति । यं **कामय इत्यादिना**।

'यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम्

(ऋ. १०-१०५-६)' ।

'अहं रुद्राय धनुरातनोमि ब्रह्मद्विषे शरवे हन्त वा उ

(ऋ. १०-१०५-६)' ।

'अस्य देवस्य मीळ्हुषो वया विष्णोरेषस्य प्रभृथे हविर्भिः ।

विदे हि रुद्रो रुद्रियं महित्वं यासिष्टं वर्तिरश्विनाविरावत्

(ऋ. ७-४०-५)' ।

'एको नारायण आसीन्न ब्रह्मा नेशानो नाग्नीषोमौ (महोप. १)'

इत्यादि श्रुतेः पान्तन्त्र्येणासमञ्जसत्वान्न पशुपतिरीश्वरो

जगत्कर्ता ॥ ३७॥

श्रुतिभिर्निराकृतं युक्तिभिश्च निराकरोति। सम्बन्धानुपपत्तेरित्यादिना।

॥ ॐ सम्बन्धानुपपत्तेश्च ॐ ॥ ३८ ॥

अशरीरत्वात्तस्य जगता सम्बन्धो न युज्यते कर्तृत्वेन मृतपुरुषवत्॥ ३८॥

॥ ॐ अधिष्ठानानुपपत्तेश्च ॐ ॥ ३९ ॥

पृथिव्याद्यधिष्ठाने स्थितो हि कुलालादिः कार्यं करोति । न चास्य तदस्ति॥ ३९॥

॥ ॐ करणवच्चेन्न भोगादिभ्यः ॐ ॥ ४० ॥

इदमेव जगत्तस्य करणवदधिष्ठानादिरूपम् । नित्यस्यापि कस्यचिद्भावाद्युज्यत इति चेन्न । भोगादिप्राप्तेः उत्पत्तिविनाशौ सुखदुःखभोगाश्च प्राप्स्यन्ते तद्वताः॥ ४०॥

ॐ अन्तवत्त्वमसर्वज्ञता वा ॐ ॥ ४१ ॥

देहवत्त्वे अन्तवत्त्वमन्यथा ज्ञानाभावः । शरीरिण एव हि ज्ञानोत्पत्तिर्दृष्टा।

वैशेषिकादिवत्पशुपतेरीश्वरस्याशरीरत्वेन अङ्गीकृतत्वात्। प्राक् सृष्टेस्तु भौतिकाभावेन लिलागृहीतदेहासम्भवात्। अधिष्ठानासम्भवाच्च नासौ जगत्कर्ता

। न हि देहरहितस्य अधिष्ठानरहितस्य कर्तृत्वं क्वचिद्दृष्टम् । यदि भौतिकाभावेऽपि तदुपादानस्य प्रधानस्य प्रलये विद्यमानत्वात्तदेव पशुपतेर्देहभूतमाधारभूतं भविष्यतीत्युच्यते । तर्हि पशुपतेर्जडदेहधारित्वेन देवदत्तवज्जन्म-मरणसुखदुःखाद्यनुभवित्वं स्यात् । यदि मरणादिभयाद्देहो नास्तीत्युच्यते तर्हिघटादिवत्सर्वज्ञत्वं न स्यात् । देहिन एव घटादिज्ञानं दृष्टं नादेहिनः इत्यर्थः । सम्बन्धानुपपत्तेरित्यादिनोक्तदेषः जगत्कर्तृविष्णोः किं न स्यादिति शङ्कां परिहरति **विष्णोरित्यादिना** ।

**विष्णोस्तु श्रुत्यैव सर्वे विरोधाः परिहृताः ।**

**'यदात्मको भगवांस्तदात्मिका व्यक्तिः ।**

**किमात्मको भगवान् ज्ञानात्मक ऐश्वर्यात्मकः शक्त्यात्मकः' इति ।**

**'बुद्धिमनोऽङ्गप्रत्यङ्गवतां भगवतो लक्षयामहे । बुद्धिमान्मनो-वानङ्गवान्प्रत्यङ्गवान्' इति ।**

**'सद्देहः सुखगन्धश्च ज्ञानभाः सत्पराक्रमः ।**

**ज्ञानज्ञानः सुखसुखः स विष्णुः परमोऽक्षरः'**

**इत्यादिकया ॥ ४१ ॥**

अप्राकृतदेहत्वेन विष्णोर्देहप्रयुक्तदोषासम्भव इत्यर्थः ।

पाशुपतपक्षनिराकरणन्यायेन स्कन्दसूर्यगणेशादिमतान्यपि निराकृतानि वेदितव्यानि ।

*॥ इति पत्युरधिकरणम् ॥ ११ ॥*

शाक्ते पक्षे तु दोषविशेषसम्भवात् **तं दूषयति** ।

**शक्तिपक्षं दूषयति**—

**॥ ॐ उत्पत्त्यसम्भवात् ॐ ॥ ४२ ॥**

**न हि पुरुषाननुगृहीतस्त्रीभ्य उत्पत्तिर्दृश्यते ॥ ४२ ॥**

**॥ ॐ न च कर्तुः करणम् ॐ ॥ ४३ ॥**

**यदि पुरुषोऽङ्गीक्रियते तस्यापि करणाभावादनुपपत्तिः ॥ ४३ ॥**

**॥ ॐ विज्ञानादिभावे वा तदप्रतिषेधः ॐ ॥ ४४ ॥**

**यदि विज्ञानादिकरणं तस्याङ्गीक्रियते तदा तत एव सृष्ट्याद्युपपत्तेरीश्वरवादान्तर्भावः ॥ ४४ ॥**

सकलश्रुतिस्मृतिसदाचारविप्रतिषिद्धत्वाच्छाक्तेयमतमशोभनमित्यर्थः ।

शक्तिपक्ष इत्यादिना । त्रिपुरी भैरवीत्यादिनाभिधेया शक्तिः केवला शक्तिः न ब्रह्मादिजगदुत्पादिका पुरुषरहितत्वात् । न हि पुरुषाननुगृहीत-स्त्रीभ्य उत्पत्तिर्दृश्यते । पुरुषो ज्ञानशक्त्यादिकरणरहितो न ब्रह्माद्युत्पादनाय शक्त्यापेक्ष्यते । असमर्थत्वेनानुपयुक्तत्वात् यदि सर्वविज्ञानसर्वशक्त्यादि मानीश्वरः शक्त्यापेक्षते इत्युच्यते, तर्हि तत एव जगत्सृष्ट्याद्युपपत्तेः पाशुपत-पक्षान्तर्भूतत्वात् । शक्तिपक्षो न तत्प्रति**षेधक इत्यर्थः** । उपसंहरति **विप्रतिषोधादित्यादिना** ।

सकल श्रुतिस्मृतिसदाचारविप्रतिषिद्धत्वाच्छाक्तेयमतमशोभनमित्यर्थः ॥

**॥ ॐ विप्रतिषेधाच्च ॐ ॥ ४५ ॥**

सकलश्रुत्यादिविरुद्धत्वाच्चासमञ्जसम् ॥ ४५ ॥

*॥ इति उत्पत्त्यधिकरणम् ॥ १२ ॥*

*इति श्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रभाष्ये*
*श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते द्वितीयाध्यायस्य*
*द्वितीयः पादः ॥ २ ॥*

इतिश्रीमदानन्दतीर्थभगवत्पादाचार्यकृतब्रह्मसूत्रभाष्यटीकायां
पद्मनाभभट्टारकविरचितायां सत्तर्कदीपावल्यां
द्वितीयाध्यायस्य द्वितीयः पादः समाप्तः ॥

श्रीकृष्णार्पणमस्तु ॥

* * *

भारतीय संस्कृतियु प्रस्थानत्रयगळंब बेरन्नु आश्रयिसि निन्तिरुव, सनातन प्रज्ञेयुळ्ळ महावृक्ष. ई वृक्षवन्नु आधरिसिये जगद्विख्यातराद दार्शनिकरु तम्म सिद्धान्तवन्नु प्रसारगोळिसुव साहित्यलतेयन्नु हब्बिसिद्दु. वेदान्तसाहित्य कृषिप्रपञ्चदल्लि अत्यन्त विशिष्टवाद मत्तु वैज्ञानिकवाद रीतियल्लि प्रमेयगळन्नु विवरिसुव मूलक ख्यातरादवरु श्रीआनन्दतीर्थरु. अर्थविवरणेयल्लि अत्यन्त विस्तारवाद हरहन्नु होन्दि आनन्दतीर्थर ई ज्ञानलतेय कुसुमगळन्नु आय्दु, अदर सौरभवन्नु जनसामान्यरेडेगे तंदिद्दु श्रीजयतीर्थरु-श्रीविजयीन्द्रतीर्थरु-श्रीराघवेंद्रतीर्थ गुरुसार्वभौमरंतह महान् चेतनरु हागू श्रीपुरन्दर-कनक-विजयदासरादियाद असंख्य हरिदासरुगळु. इदक्के पूरकवागि जगद्गुरुगळ मूलसंस्थानवे आद श्रीराघवेन्द्रस्वामिगळवर मठवंतू ज्ञानकृषिगे प्राचीनकालदिन्दलू अव्याहतवाद पोषणेयन्नु नीडुत्ता बंदिदे.

सर्वज्ञपीठदल्लि मण्डिसि वेदान्तप्रपञ्चवन्नु बेळगिद श्रीरघुनन्दनतीर्थर ५००ने वर्षद हागू श्रीराघवेंद्रस्वामिगळवर ३३३ने आराधनोत्सवद अंगवागि २००३-२००४ने वर्षवन्नु ''श्रीरघुनन्दन-श्रीराघवेन्द्रवर्ष'' एंबुदागि श्रीमठद प्रस्तुत पीठाधिपतिगळाद १०८ श्रीमत्सुशमींद्रतीर्थ श्रीपादंगळवरु घोषिसि हलवारु वैविध्यमयवाद कार्यक्रमगळन्नु हम्मिकोंडरु. 'एकोत्तरशतग्रन्थमालेयु' ई कार्यक्रमद प्रमुख अङ्ग. देशदेल्लेडे विविध भागगळल्लि अरळिद्द, अरळिद्दरू जनमानसक्के गोचरवागदे गुप्तवागुळिदिद्द हलवारु अपूर्व ग्रन्थकुसुमगळन्नु आय्दु तंदु ई मालेयन्नु पोणिसिदे. संस्कृत, कन्नड, तेलुगु, तमिळु हागू आंग्लभाषेय उत्कृष्ट कुसुमगळन्नोळगोंड ई मालेयु वैजयंतियेन्दे नम्म भावने. ई वैजयंतिय ओंदु उत्कृष्ट कुसुमवे ईग निम्म करग्राहियागिदे.

ओट्टिनल्लि हेळुवुदादरे, ई सनातनवाद ज्ञानवृक्षवन्नु अलुगाडिसुव किरुप्रयत्नवन्नु नावु माडिद्देवे. केळगे बिद्द फल हागू पुष्पगळु जिज्ञासुगळ हन्मनोमंदिरगळन्नु अलंकरिसिदरे साहित्यकृषिकर श्रम सार्थकवागि श्रीहरिवायुगुरुगळ संप्रीतिगे पात्रवादीतु.

**राजा. एस्. राजगोपालाचार्यरु**

श्रीश्रीपादंगळवर आप्तकार्यदर्शिगळु